**( ७४७ ) प्रशंसावचनैश्च २ । १ । ६६ ॥** एतैः सह जातिः प्राग्वत् । गोमतल्लिका । गोमर्चिका । गोप्रकाण्डम् । गवोद्धः । गोतल्लजः । प्रशस्ता गौरित्यर्थः । मतल्लिकादयो नियतलिङ्गाः, न तु विशेष्यनिघ्नाः । जातिः किम् ? कुमारी मतल्लिका । **( ७४८ ) युवा खलतिपलितवलिनजरतीभिः २ । १ । ६७ ॥** पूर्वनिपातनियमार्थं सूत्रम् । लिङ्गविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते । युवा खलतिर्युवखलतिः । युवतिः खलती युवखलती । युवजरती । युवत्यामेव जरतीधर्मोपलम्भेन

---

**( ७४७ ) प्रशंसावचनैश्च** । **एतैरिति** । रूढया प्रशंसावाचकैरित्यर्थः[1] । **जातिरिति** । 'पोटायुवति' इत्यतस्तदनुवृत्तेरिति भावः । **प्राग्वदिति** । समानाधिकरणैः समस्यते स तत्पुरुष इत्यर्थः । जातेः पूर्वनिपातनियमार्थं सूत्रम् । **गोमतल्लिकेति** । मतल्लिका चासौ गौश्चेति विग्रहः । **गोमर्चिकेति** । मर्चिका चासौ गौश्चेति विग्रहः । **गोप्रकाण्डमिति** । प्रकाण्डं चासौ गौश्चेति विग्रहः । **गवोद्ध इति** । उद्धश्चासो गौश्चेति विग्रहः । 'अवङ् स्फोटायनस्य' । 'आद्गुणः' । **गोतल्लज इति** । तल्लजश्चासौ गौश्चेति विग्रहः । सर्वत्र परवल्लिङ्गता । मतल्लिकादिशब्दानामप्रसिद्धत्वाद्व्याचष्टे—**प्रशस्ता गौरित्यर्थ इति** । गोशब्दस्य स्त्रीलिङ्गत्वाभिप्रायात्प्रशस्तेति स्त्रीलिङ्गनिर्देशः । गोशब्दस्य पुंल्लिङ्गत्वे तु प्रशस्त इति पाठ्यम् । ननु गोशब्दस्य पुंल्लिङ्गत्वे मतल्लिकामर्चिकाप्रकाण्डशब्दानामपि विशेष्यनिघ्नत्वात् पुंल्लिङ्गतापत्तिः । गोशब्दस्य स्त्रीलिङ्गत्वे तु प्रकाण्डोद्घतल्लजानामपि स्त्रीलिङ्गतापत्तिश्चेत्यत आह—**मतल्लिकादय इति** । 'मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । **कुमारी मतल्लिकेति** । अवस्थाविशेषात्मकयोर्विशेषवाचित्वान्न जातिवाची कुमारीशब्द इति न समासः । समासे तु 'पुंवत्कर्मधारय' इति पुंवत्त्वं स्यादिति भावः ।

**( ७४८ ) युवा खलति** । युवन्शब्दः खलत्यादिभिः समानाधिकरणैः समस्यते, स तत्पुरुष इत्यर्थः । विशेषणसमासेन सिद्धे किमर्थमिदमित्यत आह—**पूर्वेति** । युवन्शब्दस्य खलत्यादिशब्दानां च गुणवाचित्वाद्विशेषणत्वे कामचारात्पूर्वनिपातस्यानियमे प्राप्ते तन्नियमार्थमिदं सूत्रमित्यर्थः । खलतिः केशहीनशिराः । 'पलितं जरसा शौक्ल्यम्' 'वलिनो वलिभः समौ' इत्यमरः । **युवा खलतिः युवखलतिरिति** । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः । ननु युवेति पुंल्लिङ्गनिर्देशात् कथं युवतिशब्दस्य समास इत्यत आह—**लिङ्गविशिष्टेति** । **युवतिः खलती युवखलती इति** । 'पुंवत्कर्मधारय' इति पुंवत्त्वम् ।

---

[1] "वचनग्रहणं यौगिकानां प्रशस्तादीनां विशेषार्थकानां च शुचिप्रभृतीनां स्वार्थभिन्ने प्रयोगाव प्रशंसागमकानां व्याघ्रादिपदानां च निरासेन प्रशंसामात्ररूढशब्दपरिग्रहार्थम्" । व्या० सि० सु०—पृ० ९६६

तद्रूपारोपात्सामानाधिकरण्यम् । **( ७४९ ) कृत्यतुल्याख्या अजात्या २ । १ । ६८ ॥** भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्या किम् ? भोज्य ओदनः । प्रतिषेध-सामर्थ्याद्विशेषणसमासोऽपि न । **( ७५० ) वर्णो वर्णेन २ । १ । ६९ ॥** समानाधि-करणेन सह प्राग्वत् । कृष्णसारङ्गः । **( ७५१ ) कडाराः कर्मधारये २ । २ । ३८ ॥** कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः । **( ७५२ ) कुमारः श्रमणादिभिः २ । १ । ७० ॥** कुमारी श्रमणा कुमारश्रमणा । इह

---

युवजरतीति । जरती वृद्धा । युवतिश्चासौ जरती चेति विग्रहः । 'पुंवत्कर्मधारय' इति पुंवत्त्वम् । ननु युवतिः कथं जरती स्यादित्यत आह—**युवत्यामेवेति** ।

( ७४९ ) **कृत्यतुल्याख्या** । कृत्यप्रत्ययान्ताः तुल्यवाचकाश्च जातिभिन्नवाचकेन समानाधिकरणेन समस्यन्ते स तत्पुरुष इत्यर्थः । **भोज्योष्णमिति** । भोज्यं च तदुष्णं चेति विग्रहः । 'ऋहलोर्ण्यत्' इति ण्यत् । अर्हे कृत्यप्रत्ययः । भोज्योष्णशब्दयोः क्रियागुण-शब्दत्वात् विशेषणत्वे कामचारादनियतपूर्वनिपाते प्राप्ते नियमार्थमिदम् । **तुल्यश्वेत इति** । तुल्यश्चासौ श्वेतश्चेति विग्रहः । उभयोर्गुणवचनतया विशेषणत्वानियमेऽपि तुल्यशब्दस्यैव पूर्वनिपातः । आख्याग्रहणस्य प्रयोजनमाह—**सदृशश्वेत इति** । सदृशशब्दस्य तुल्यपर्याय-त्वादिति भावः । **भोज्य ओदन इति** । अत्र ओदनशब्दस्य जातिवाचित्वात्तेनायं समासो न भवतीत्यर्थः । नन्वेतत्समासाभावेऽपि विशेषणसमासो दुर्वार इत्यत्र आह—**प्रतिषेधेति** । भोज्यशब्दपूर्वनिपातस्योभयत्राप्यविशिष्टतया 'अजात्या' इति पर्युदासवैयर्थ्यादिति भावः ।

( ७५० ) **वर्णो** । शेषपूरणेन सूत्रं व्याचष्टे—**समानाधिकरणेनेति** । वर्णवाचिना समानाधिकरणेन वर्णवाची समस्यते स तत्पुरुष इत्यर्थः । **कृष्णसारङ्ग इति** । सारङ्ग-श्चित्रवर्णवान् । कृष्णशब्दः कृष्णावयवके लाक्षणिक इति सामानाधिकरण्यम् । कृष्णश्चासौ सारङ्गश्चेति विग्रहः । विशेषणसमासेन सिद्धे इदं प्रपञ्चार्थमेव । यत्तु 'वर्णो वर्णेष्वनेते' इति स्वरविधौ प्रतिपदोक्तत्वादस्यैव ग्रहणार्थमिदम् । तेन सारङ्गस्यावयवः कृष्णः सारङ्गकृष्ण इत्यत्र 'वर्णो वर्णेषु' इति स्वरो नेति, तच्चिन्त्यम्, कर्मधारयस्वरप्रकरणे 'वर्णो वर्णेष्वनेते' इति सूत्रस्य पाठेनैव सिद्धेरिति दिक् ।

( ७५१ ) **कडाराः कर्मधारये** । 'उपसर्जनं पूर्वम्' इत्यतः पूर्वमित्यनुवर्तते । कडाराः इति बहुवचननिर्देशात्तदादिग्रहणम् । तदाह—**कडारादय इति** । 'उपसर्जनं पूर्वम्' इति नित्ये प्राप्ते विकल्पोऽयम् । **कडारजैमिनिरिति** । कडारश्चासौ जैमिनिश्चेति विग्रहः ।

( ७५२ ) **कुमारः श्रमणादिभिः** । कुमारशब्दः श्रमणादिभिः समानाधिकरणैः समस्यते स तत्पुरुष इत्यर्थः । **कुमारी श्रमणा कुमारश्रमणेति** । 'पुंवत्कर्मधारय' इति पुंवत्त्वम् । [illegible] ननु सूत्रे कुमारशब्दस्य पुंलिङ्गस्यैव पाठात्

गणे श्रमणा, प्रव्रजिता, गर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते। लिङ्गविशिष्टपरिभाषाया एतदेव[1] ज्ञापकं बोध्यम्। (७५३) चतुष्पादो गर्भिण्या २।१।७१॥ चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत्। गोगर्भिणी। 'चतुष्पाज्जातिरिति वक्तव्यम्' (वा १३११)। नेह–स्वस्तिमती गर्भिणी। (७५४) मयूरव्यंसकादयश्च २।१।७२॥ एते निपात्यन्ते। मयूरो व्यंसकः मयूरव्यंसकः। व्यंसको धूर्तः। उदक्चावाक्चोच्चावचम्। निश्चितं च प्रचितं च निश्चप्रचम्। नास्ति किञ्चन यस्य सोऽकिञ्चनः[2]। नास्ति कुतो भयं यस्य सोऽकुतोभयः। अन्यो राजा राजान्तरम्। चिदेव चिन्मात्रम्। 'आख्या-

---

कथमिह स्त्रीलिङ्गस्योदाहरणमित्यत आह—इहेति। ननु गणे स्त्रीलिङ्गानामेव पाठे सूत्रस्य कथं तेषु प्रवृत्तिः। न च लिङ्गविशिष्टपरिभाषयेति वाच्यम्, तत्सद्भावे प्रमाणाभावादित्यत आह—लिङ्गेति। एतदेवेति। एतदपीत्यर्थः, 'युवा खलति' इति सूत्रे जरतीग्रहणस्यापि तज्ज्ञापकत्वात्। न हि युवन्शब्दस्य जरतीसामानाधिकरण्यमस्ति।

(७५३) चतुष्पादो गर्भिण्या। 'जातिग्रहणं कर्तव्यम्' इति वार्तिकमभिप्रेत्याह—चतुष्पाज्जातीति। गोगर्भिणीति। गर्भिणी चासौ गौश्चेति विग्रहः। विशेष्यस्य पूर्वनिपातार्थमिदं सूत्रम्। जातिरिति किम्। कालाक्षी गर्भिणी।

(७५४) मयूरव्यंसकादयश्च। एते निपात्यन्त इति। कृतसमासकार्या निर्दिश्यन्त इत्यर्थः। मयूरव्यंसक इति। व्यंसकश्चासौ मयूरश्चेति विग्रहः। व्यंसको धूर्त इति। अत्र कोशो मृग्यः। गुणवचनत्वात् व्यंसकशब्दस्य पूर्वनिपाते प्राप्ते इदं वचनम्। उच्चावचमिति। उदक्शब्दस्य उच्चेत्यादेशः। अवाक्शब्दस्य अवचादेशश्च। 'उच्चावचं नैकभेदम्' इत्यमरः। निश्चप्रचमिति। निश्चितशब्दस्य निश्चादेशः। प्रचितशब्दस्य प्रचादेशः। नास्ति किञ्चनेति। चनेत्यव्ययमप्यर्थे। नास्ति किमपि यस्येत्यर्थे बहुव्रीह्यपवादस्त्रिपदस्तत्पुरुषः। नञो नकारस्य लोपश्च निपात्यते। 'न लोपो नञः' इति तु 'नात्र प्रवर्तते' किंशब्दस्य उत्तरपदत्वाभावात्, समासचरमखण्ड एव उत्तरपदशब्दस्य रूढत्वात्। नास्ति कुत इति। कुतोऽपि भयमस्य नास्तीति विग्रहस्यार्थः। अकुतोभय इति। बहुव्रीह्यपवादस्तत्पुरुषः। अन्यो राजा राजान्तरमिति। अत्र अन्तरशब्दः अन्यपर्यायः[3]। तस्य स्थाने अन्यशब्दो

---

१. "एतदपीत्यर्थः। "युवा खलति" २-१-६७ इति सूत्रे जरतीग्रहणस्यापि ज्ञापितत्वात्"।—ल० श० शे० (प्रकृतसूत्रव्याख्यायाम्)।

२. "राघवः प्रोष्य पापीयान् जहीहि तमकिञ्चन"—भट्टिः।

३. वनान्तरम् इत्यत्र अन्यद् वनम् इति विग्रहः। अत्र अन्तरशब्दो भिन्नार्थः। स च अभेदेन वने विशेषणम्, वनान्तरं गच्छतीत्यादौ अस्माद् वनाद् भिन्नं वनं गच्छति इत्यर्थस्यैव प्रतीतिसत्त्वात्।

तमाख्यातेन क्रियासातत्ये' ( ग २० )। अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता[१]। पचतभृज्जता। खादतमोदता। 'एहीडादयोऽन्यपदार्थे' (ग १८)। एहीड इति यस्मिन्कर्मणि तदेहीडम्। एहियवम्। उद्धर कोष्ठादुत्सृज देहीति यस्यां क्रियायां सोद्धरोत्सृजा। उद्धमविधमा। असातत्यार्थमिह पाठः। 'जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति' ( ग २९ )। जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत्कर्ताभिधीयत इत्यर्थः। जहिजोडः। जहिस्तम्बः। ( ७५५ ) ईषदकृता २।२।७॥ ईषत्पिङ्गलः। 'ईषद्गुणवचनेनेति वाच्यम्' ( वा १३१६ )। ईषद्रक्तम्। ( ७५६ ) नञ् २।२।६॥ नञ्सुपा सह समस्यते। ( ७५७ ) नलोपो नञः ६।३।७३॥

---

विग्रहवाक्ये ज्ञेयः, नित्यसमासत्वेन अस्वपदविग्रहौचित्यात्। नित्यसमासत्वं च राजान्तर-मित्यस्य व्याख्यानादेव ज्ञेयम्। अत्र अन्तरशब्दस्य परनिपातः। चिदेव चिन्मात्रमिति। 'मात्रं कात्स्न्येंऽवधारणे' इत्यमरः। नित्यसमासत्वसूचनाय अस्वपदविग्रहः। निपातनाद-नुनासिकनित्यतेत्याहुः। आख्यातमिति। गणसूत्रम्। क्रियासातत्ये गम्ये तिङन्तं तिङन्तेन समस्यते, स तत्पुरुष इत्यर्थः। अश्नीत पिबतेति। इहासुबन्तत्वेऽपि समासः। क्रियारूप-स्यान्यपदार्थस्य प्राधान्यात् स्त्रीत्वाट्टाप्। एवं पचतभृज्जतेत्यादावपि। एहीडादय इति। इदमपि गणसूत्रम्। अन्यपदार्थे एहीडादयो निपात्यन्त इत्यर्थः। एहि ईडे इति विग्रहः। ईडे इति लडुत्तमपुरुषैकवचनम्। डकारादेकारस्य अकारादेशः। एहियवमिति। यौमीत्यस्य यवादेशः। उत्सृजेत्यस्य विवरणम्—देहीति। इह पाठ इति। एहीडादिष्वित्यर्थः। 'जहि कर्मणा बहुलम्' इत्यपि गणसूत्रम्। कर्ता अभिधीयते इति। उक्तः कर्तेत्यर्थः। जहिजोड इति। जोड इति कस्यचित् सञ्ज्ञा। जहि जोडं जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः। जहिस्तम्ब इति। जहिस्तम्बम्, जहिस्तम्बमिति—य आहेति विग्रहः। इति समानाधिकरणाधिकारः।

( ७५५ ) ईषदकृता। ईषच्छब्दः अकृदन्तप्रकृतिकसुबन्तेन समस्यते स तत्पुरुष इत्यर्थः। ईषत्पिङ्गल इति। पिङ्गलशब्दः अव्युत्पन्नप्रातिपदिकमिति भावः। ईषद्गुण-वचनेनेति। अकृतेत्यपहायेति शेषः।

( ७५६ ) नञ्। इदं समानाधिकरणाधिकारस्थं नेत्यभिप्रेत्याह–सुपा समस्यत इति।

( ७५७ ) न लोपो नञः। नेति लुप्तषष्ठीकं पदम्। तदाह—नञो नस्येति। उत्तरपदे इति। 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति भावः। नञोऽशिति सिद्धे लोपवचनम् अक-ब्राह्मण इति साकच्कार्थमित्याहुः। अब्राह्मण इति। अत्रारोपितत्वं नञर्थः। आरोपितत्वं च ब्राह्मणत्वद्वारा ब्राह्मणे अन्वेति। आरोपितब्राह्मणत्ववानिति बोधः। अर्थात् ब्राह्मण-



१. "अश्नीत-पिबतीयन्ती प्रसिता स्मरकर्मणि"—भट्टिकाव्यम्।

**नञो नस्य लोपः स्यादुत्तरपदे। न ब्राह्मणोऽब्राह्मणः (७५८) तस्मान्नुडचि ६। ३। ७४॥ लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुमागमः स्यात्। अनश्वः। अर्थाभावेऽव्ययीभावेन सहायं विकल्प्यते। 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्' इति 'अद्रुतायामसंहितम्' (वा ११६७)**

---

भिन्न इति पर्यवस्यति। केचित्तु नञ्भिन्नवाची, ब्राह्मणादिभिन्न इत्यर्थं इत्याहुः। तदयुक्तम्, ब्राह्मणाद्भिन्न इत्यर्थे पूर्वपदार्थप्राधान्यापत्तेः। तथा च 'उत्तरपदार्थप्रधानस्तत्पुरुषः' इति भाष्योद्घोषो विरुध्येत। किञ्च, अते, अतस्मै, अतस्मादित्यादौ सर्वनामकार्यं शीभावस्मायादिकं न स्यात्, तच्छब्दार्थस्य नञर्थं प्रति विशेषणत्वे अप्रधानत्वात् 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्युक्तेः। तथा अस इत्यादौ 'तदोः सः सावनन्त्ययोः' इति सर्वाद्यन्तर्गतत्यदादिकार्यं सत्वं च न स्यात्। अनेकमित्यत्र एकवचनानुपपत्तिश्च। एकभिन्नस्य एकत्वासम्भवेन द्वित्वबहुत्वनियमेन च द्विबहुवचनापत्तेः। तथा सति 'अनेकमन्यपदार्थे' इति नोपपद्येत। 'एतत्तदोः सुलोपः' इत्यत्र अनञ्समासग्रहणं चात्र लिङ्गम्। तद्धि असः शिवः, अनेषः शिवः इत्यादौ सुलोपाभावार्थम्। तद्भिन्नः एतद्भिन्नः इत्यर्थे तु तच्छब्दाद्यर्थस्य उपसर्जनतया त्यदाद्यत्वानापत्तौ हल्ङ्यादिलोपस्य दुर्वारत्वात्तद्वैयर्थ्यं स्पष्टमेव। तस्मादुत्तरपदार्थप्राधान्यं भाष्योक्तमनुसृत्य आरोपितत्वमेव नञर्थ इति युक्तम्। विस्तरस्तु प्रौढमनोरमायां शब्दरत्ने मञ्जूषायां च ज्ञेयः। प्राचीनास्तु—

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥'

इति पठित्वा अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोश्वेभ्यः, अधर्मं इत्युदाजह्रुः। तत्र सादृश्यादिकं प्रकरणादिगम्यमित्याहुः।

**(७५८) तस्मान्नुडचि**। तच्छब्देन पूर्वसूत्रावगतो लुप्तनकारो नञ् परामृश्यते। उत्तरपद इत्यनुवृत्तमचीत्यनेन विशेष्यते। तदादिविधिः। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वात्' इति परिभाषया सप्तमी षष्ठीं प्रकल्पयति। तदाह—**लुप्तनकारादिति। अनश्व इति**। समासे सति नञो नकारस्य लोपे तत्परिशिष्टाकारस्य नुट्। टकार इत्। उकार उच्चारणार्थः। टित्वादाद्यवयव इति भावः। नुक् तु न कृतः, ङमुट्प्रसङ्गात्। ननु 'उत्तरे कर्मण्यविघ्नमस्तु' इत्यादौ विघ्नानामभाव इत्यर्थे नञ्तत्पुरुषे सति परवल्लिङ्गत्वे अविघ्न इति स्यात्। न च अर्थाभावे अव्ययीभावेन तत्सिद्धिरिति वाच्यम्, अव्ययीभावस्य निर्मक्षिकमित्यादौ सावकाशतया परत्वात्तत्पुरुषस्यैव प्रसङ्गादित्यत आह—**अर्थाभावे इति। रक्षेति**। परस्पशाह्निकभाष्ये इदं वाक्यम्। रक्षा च ऊहश्च आगमश्च लघु च असन्देहश्च इति द्वन्द्वः। 'परवल्लिङ्गम्' इति पुंस्त्वम्। अत्र सन्देहाभाव इत्यर्थे असन्देहशब्दस्य असन्देहा इति प्रयोगात् तत्पुरुषो विज्ञायते। अव्ययीभावे रक्षोहागम-

इति च भाष्यवार्तिकप्रयोगात् । तेन अनुपलब्धिः, अविवादः, अविघ्नम् इत्यादि सिद्धम् । 'नञो नलोपस्तिङि क्षेपे' (वा ३९८४) । अ-पचसि त्वं जाल्म । नैकधा इत्यादौ तु न-शब्देन 'सह सुपा' (सू ६४९) इति समासः । (७५९) नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ६ । ३ । ७५ ॥ [1]पात् इति शत्रन्तः[2] । वेदाः इत्यसुन्नन्तः । न सत्या असत्याः । न असत्या नासत्याः[3] । न मुञ्चतीति नमुचिः । न कुलमस्य नकुलम् । न खमस्य नखम् । न स्त्री पुमान् नपुंसकम् । स्त्रीपुंसयोः पुंसकभावो निपातनात् । न क्षरतीति नक्षत्रम् । क्षीयतेः क्षरतेर्वा क्षत्रमिति निपात्यते । न क्रामतीति नक्रः । 'क्रमेर्डः' । न अकमस्मिन्निति नाकः । (७६०) नगोऽप्रा-

---

लघ्वसन्देहमिति स्यात् । अद्रुतायामसंहितमिति । 'परः सन्निकर्षः संहिता' इति सूत्रे पठितमिदं वार्तिकम् । अद्रुतायां वृत्तौ संहिताभाव इत्यर्थः । अत्र अव्ययीभावे सति असंहितमिति प्रयोगात् अव्ययीभावेऽपि अर्थाभावो नञा गम्यो भवतीति विज्ञायते । अन्यथा तत्पुरुषे सति परवल्लिङ्गत्वादसंहितेति स्यात् । ततश्च नञा गम्ये अभावे तत्पुरुषाव्ययीभावयोर्विकल्प इति स्थितम् । तेनेति । अनुपलब्धिरित्यत्र अविवाद इत्यत्र तत्पुरुषः, अविघ्नमित्यत्र अव्ययीभावश्च सिध्यतीत्यर्थः । शब्देन्दुशेखरे तु अन्यथा प्रपञ्चितम् । नञो नलोपस्तिङि क्षेपे इति । 'नलोपो नञः' इति सूत्रस्थवार्तिकमिदम् । नञो नकारस्य लोपः स्यात् तिङि परे निन्दायामिति वक्तव्यमित्यर्थः । अ-पचसि त्वं जाल्मेति । कुत्सितं पचसीत्यर्थः । अत्र अ इति भिन्नं पदं तिङन्तेन समासाभावात् । वार्तिकमिदं प्रसङ्गादुपन्यस्तम् । केचित्तु अस्मानञ् समानार्थकेन 'अ' इत्यव्ययेनापि सिद्धमिदमिति वार्तिकं विफलमेव । केचित्तु अस्मादेव वार्तिकादव्ययेषु अ इत्यस्य पाठः अप्रामाणिक इत्याहुः । ननु नैकधेत्यत्रापि नञ्समासे 'नलोपो नञः' इति नकारस्य लोपे 'तस्मान्नुडचि' इति नुटि अनेकधेत्येव स्यादित्यत आह—नैकधेत्यादौ त्विति । एतदर्थमेव 'नञ्' इति सूत्रे 'नलोपो नञः' इति सूत्रे च ञकारानुबन्धग्रहणमिति भावः ।

(७५९ नभ्राण्नपात् । सुगमम् ।

---

१. "पातेः क्विपि निपातनात्तुक् इति "उभे वनस्पत्यादिषु" ६-२-१४० सूत्रे वृत्तिः" । ल० श० शे०--भैरवी टीका सहितम्—पृ० ५४ ।

२. (क) नपुंसकत्वादसत्यां सर्वनामसंज्ञायाम् उगिल्लक्षणो नुम् न भवति ।—पदमञ्जरी ।

(ख) अपान्नपादित्यादौ अनपुंसकेऽपि दर्शनात् "उभे वनस्पत्यादिषु" इत्यत्र पातेः क्विपि निपातनात् तुगित्यभिधानाच्च अपपाठोऽयम् । पादिति क्विबन्तोऽयमिति पाठ. । — पदमन्जरी ।

३. 'नासत्याः' इति बहुवचनं वैचित्र्यार्थम्, न तु बहुवचनान्तस्यैव साधुत्वार्थम् । 'नासत्याश्विनौ दस्रौ' इत्यमरविरोधात् । अश्विनोरेवायं साधुः । अयं तदर्थे रूढः ।

**णिच्वन्यतरस्याम्** । ६ । ३ । ७७ ॥ नग इत्यत्र नञ्प्रकृत्या वा । नगाः—अगाः पर्वताः । अप्राणिष्विति किम् ? अगो वृषलः शीतेन । 'नित्यं क्रीडा'–( सू ७११ ) इत्यतः नित्यम् इत्यनुवर्तमाने–( ७६१ ) **कुगतिप्रादयः** २ । २ । १८ ॥ एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः । 'गतिश्च' ( सू २३ ) इत्यनुवर्तमाने । ( ७६२ ) **ऊर्यादिच्विडाचश्च** १ । ४ । ६१ ॥ एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । 'कारिकाशब्दस्योपसङ्ख्यानम्' ( वा ११३२ ) । कारिका क्रिया । कारिकाकृत्य । (७६३) **अनुकरणं चानितिपरम्** १।४।६२ ॥ खाट्कृत्य । अनितिपरम् किम् ? खाडिति कृत्वा निरष्ठीवत् । ( ७६४ ) **आदरानादरयोः सदसती** १ । ४ । ६३ ॥ सत्कृत्य ।

---

( ७६० ) **अनुवर्तमान इति** । समासविधयो वक्ष्यन्त इति शेषः ।

( ७६१ ) **कुगतिप्रादयः** । **समस्यन्त इति** । स तत्पुरुष इत्यपि ज्ञेयम् । **कुत्सितः पुरुष इति** । नित्यसमासत्वादस्वपदविग्रहः । कुत्सितार्थकस्य कु इत्यव्ययस्यैवात्र ग्रहणम्, न तु पृथ्वीपर्यायस्य, गत्यादिसाहचर्यात् । **गतिश्चेत्यनुवर्तमान इति** । क्रियायोग इति चेति बोध्यम् ।

( ७६२ ) **ऊर्यादिच्विडाचश्च** । च्विडाचौ प्रत्ययौ । **ऊरीकृत्येति** । ऊरीत्यव्ययमङ्गीकारे, तस्य कृत्वेत्यनेन गतिसमासः । समासेऽनञ्पूर्वे क्त्वो ल्यप् । **शुक्लीकृत्येति** । अशुक्लं शुक्लं कृत्वेत्यर्थः । 'कृभ्वस्तियोगे' इत्यभूततद्भावे च्विः । गतिसमासे सति क्त्वो ल्यप्, वेरपृक्तस्येति वलोपः । 'अस्य च्वौ' इति ईत्त्वम् । **पटपटाकृत्येति** । पटपटा इति शब्दं कृत्वेत्यर्थः । 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इति पटच्छब्दाड्डाचि द्वित्वम्, टिलोपः । 'नित्यमाम्रेडिते डाचि' इति तकारपकारयोः पकार एकादेशः । गतिसमासे क्त्वो ल्यप् । **कारिकाशब्दस्योपसंख्यानमिति** । गतिसंज्ञाया . इति शेषः । कारिकाशब्दं व्याचष्टे—**कारिका क्रियेति** । 'स्त्रियां क्तिन्' इत्यधिकारे धात्वर्थनिर्देशे ण्वुल् । **कारिकाकृत्येति** । क्रियां कृत्वेत्यर्थः । द्वितीयान्तस्य गतिसमासे क्त्वो ल्यप्, सुब्लुक्, कारिकाशब्दोऽत्र न कर्त्रीवाची, न श्लोकवाची च, व्याख्यानात् ।

( ७६३ ) **अनुकरणं चानितिपरम्** । अनुकरणं गतिसंज्ञं स्यात् इतिपरं वर्जयित्वेत्यर्थः । **खाट्कृत्येति** । खाडिति शब्दं कृत्वेत्यर्थः । गतिसमासे क्त्वो ल्यप् । **खाडिति कृत्वेति** । न चात्र इतिशब्देन व्यवहितत्वे क्रियायोगाभावादेव गतिसंज्ञा न भविष्यति, तत्किमनितिपरग्रहणेनेति वाच्यम्, यथाकथञ्चित्क्रियायोगसत्त्वात् । 'ते प्राग्धातोः' इति सूत्रे तु ते गत्युपसर्गाः धातोः प्रागेव प्रयोज्याः, न तु परत इति प्रयोगनियमपरमेवेति भावः ।

( ७६४ ) **आदरानादरयोः सदसती** । सदिति असदिति च अव्यये आदरानादरयोः क्रमेण विद्यमाने गतिसञ्ज्ञके स्त इत्यर्थः । **सत्कृत्येति** । आदरं कृत्वेत्यर्थः । **असत्कृत्येति** । अनादरं कृत्वेत्यर्थः । गतिसमासे क्त्वो ल्यप् ।

असत्कृत्य । ( ७६५ ) भूषणेऽलम् १।४।६४ ।। अलङ्कृत्य । भूषणे किम् ? अलं कृत्वौदनं गतः । पर्याप्तमित्यर्थः । अनुकरणम्—( सू ७६३ ) इत्यादित्रिसूत्री स्वभावात्कृञ्विषया[1] । ( ७६६ ) अन्तरपरिग्रहे । १ । ४ । ६५ ।। अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् ? अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः । ( ७६७ ) कणेमनसी श्रद्धाप्रतीघाते १ । ४ । ६६ ।। कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातः[2] अभिलाषातिशये वर्तते । मनश्शब्दोऽप्यत्रैव । ( ७६८ ) पुरोऽव्ययम्[3]

( ७६५ ) **भूषणेऽलम्** । भूषणे विद्यमानमलमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । **अलङ्कृत्येति** । कटकादिधारणेन परिष्कारं कृत्वेत्यर्थः । **कृञ्विषयेति** । कृञ्योग एव भवतीत्यर्थः । वस्तुतस्तु सङ्कोचे प्रमाणाभावात् धात्वन्तरयोगेऽपि त्रिसूत्रीप्रवृत्तिर्युक्ता । अत एव अलं भुक्त्वा ओदनं गत इति वृत्तिकृता प्रत्युदाहृतम् ।

( ७६६ ) **अन्तरपरिग्रहे** । अपरिग्रहे वर्तमानम् अन्तरित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । **हतं परिगृह्येति** । हत्वा गमनं, हतम् अपरिगृह्य परिगृह्य वा भवति । तत्र आद्यमुदाहरणं, द्वितीयं प्रत्युदाहरणमित्यर्थः । अपरिग्रह इति प्रयोगोपाधिरेव, न तु वाच्यकोटिप्रविष्टम् ।

( ७६७ ) **कणेमनसी श्रद्धाप्रतीघाते** । कणेशब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञकौ स्तः । अत्यन्ताभिलाषः श्रद्धा, तस्याः निवृत्तिः प्रतीघातः । **कणेहत्येति** । गतिसमासे क्त्वो ल्यप् । **मनोहत्येति** । पयः पिबतीत्यनुषज्यते । ननु समासे कृते इति सप्तम्याः कथं न लुगित्यत आह—**कणेशब्द इति** । ननु श्रद्धाप्रतीघातस्य कथमिहावगतिः, श्रद्धावाचकशब्दाभावात् । मनसो घाते सति कथं वा पयःपानमित्यत आह—**अभिलाषातिशये इति** । कणेशब्द इत्यनुषज्यते । 'परावरयोगे च' इति सूत्रेण क्त्वा । अभिलाषनिवृत्तिपर्यन्तं पयः पिबतीत्यर्थः । श्रद्धाप्रतीघाते किम् ? कणे हत्वा गतः । सूक्ष्मस्तण्डुलावयवः कणः, तद्विषये हत्वा गत इत्यर्थः । मनो हत्वा गतः, विषपानादौ मनःप्रवृत्ति प्रतिबध्य गत इत्यर्थः ।

( ७६८ ) **पुरोऽव्ययम्** । पुर इत्यव्ययं गतिसंज्ञकं स्यात् । **पुरस्कृत्येति** । गतिसमासे क्त्वो ल्यप् । अव्ययं किम् ? पुरम्, पुरौ, पुरः—कृत्वा गतः ।

---

१. अनुकरणमित्यादि योगत्रयं स्वभावात् कृञ्विषयमिति सम्प्रदायः ।—व्या० सि० सु० पृ० ८७६ ।

२. 'कणे' इति सप्तमी प्रतिरूपको मनः शब्दश्च इच्छातिशयार्थौ निपातौ । —व्या० सि० सु० ८७६ ।

३. 'पूर्वाधरावराणामिति' व्युत्पादितोऽसिप्रत्ययान्तः पुरः-शब्द उक्तसंज्ञः । व्या० सि० सु० पृ० ८८७ ।

१ । ४ । ६७ ॥ पुरस्कृत्य । ( ७६९ ) अस्तं च १ । ४ । ६८ ॥ अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् । अस्तङ्गत्य । ( ७७० ) अच्छगत्यर्थवदेषु १ । ४ । ६९ ॥ अव्ययम् इत्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा, उक्त्वा चेत्यर्थः । अव्ययम् किम् ? जलमच्छं गच्छति । ( ७७१ ) अदोऽनुपदेशे १ । ४ । ७० ॥ अदःकृत्य, अदःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम् । अदः कृत्वा, अदः कुरु । ( ७७२ ) तिरोऽन्तर्धौ १ । ४ । ७१ ॥ तिरोभूय । ( ७७३ ) विभाषा कृञि १ । ४ । ७२ ॥ तिरस्कृत्य, तिरःकृत्य; तिरः कृत्वा । ( ७७४ ) उपाजेऽन्वाजे १ । ४ । ७३ ॥ एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य, उपाजे कृत्वा । अन्वाजेकृत्य, अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः ।

---

( ७६९ ) अस्तं च । पूर्वसूत्रादव्ययमित्यनुवर्तत इत्याह—**नान्तमव्ययमिति** । **अस्तङ्गत्येति** । तिरोधानं प्राप्येत्यर्थः । अव्ययं किं, काण्डम् अस्तं कृत्वा । प्रक्षिप्तं कृत्वेत्यर्थः ।

( ७७० ) **अच्छगत्यर्थवदेषु** । गत्यर्थधातुषु वदधातौ च प्रयुज्यमानेषु अच्छेत्यव्ययं गतिसंज्ञं स्यात् । **अच्छगत्येति** । गतिसमासे क्त्वो ल्यप् । **अच्छोद्येति** । वदधातोः क्त्वा । गतिसमासे क्त्वो ल्यप् । अच्छेत्यव्ययमाभिमुख्ये । तद्यथा—बहिरच्छैतीति । तदाह—**अभिमुखमिति** । **जलमच्छं गच्छतीति** । अत्राच्छशब्दस्य नाव्ययत्वम्, न गतिसञ्ज्ञा, नापि 'प्राग्रीश्वरान्निपाताः' इत्यधिकृतनिपातसञ्ज्ञा । निपातत्वे सति हि अव्ययत्वात् विभक्तिलुक् स्यादिति भावः ।

( ७७१ ) **अदोऽनुपदेशे** । अदश्शब्दः अनुपदेशे गतिसञ्ज्ञः स्यात् । **अदःकृत्येति** । गतिसमासे क्त्वो ल्यप् । अमुं यज्ञं कृत्वेत्यर्थे तु सुब्लुक् च । **अदःकृतमिति** । 'गतिरनन्तरः' इति स्वरः फलम् । यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम्[1] । **परं प्रतीति** । अदः कृत्वा अदः कुर्वित्यादावित्यर्थः ।

( ७७२ ) **तिरोऽन्तर्धौ** । अन्तर्धिः व्यवधानम्, तत्र तिरस् इत्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । **तिरोभूयेति** । गतिसमासे क्त्वो ल्यप् । व्यवहितो भूत्वेत्यर्थः ।

( ७७३ ) **विभाषा कृञि** । कृञि प्रयुज्यमाने तिरस् इत्यव्ययं गतिसञ्ज्ञं वा स्यादित्यर्थः । **तिरस्कृत्य, तिरःकृत्येति** । गतिसञ्ज्ञापक्षे गतिसमासे क्त्वो ल्यप् । **'तिरसोऽन्यतरस्याम्'** इति सत्वविकल्पः । **तिरः कृत्वेति** । गतित्वाभावपक्षे सत्वमपि न भवति तद्विधौ गतिग्रहणानुवृत्तेरित्याहुः । केचित्तु तिरस्कार इति परिभवे प्रयोगदर्शनात् सत्वविधौ गतिग्रहणं नानुवर्तयन्ति ।

( ७७४ ) **उपाजेऽन्वाजे** । **उपाजेकृत्य** । गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप् । अन्वा-

---

१. स्वयमेव पर्यालोचने [illegible] —व्या० सि० सु० पृ० ८७७।

**(७७५) साक्षात्प्रभृतीनि च १ । ४ । ७४ ॥** कृञि वा गतिसंज्ञानि स्युः । **'च्व्यर्थ इति वाच्यम्' (वा ११४२)** । साक्षात्कृत्य, साक्षात् कृत्वा । लवणंकृत्य, लवणं कृत्वा । मान्तत्वं निपातनात्[1] । **(७७६) अनत्याधान उरसिमनसी १ । ४ । ७५ ॥** उरसिकृत्य, उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य, मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेषणं, तत्र न । उरसि कृत्वा पाणिं शेते । **(७७७) मध्ये-पदे-निवचने च १ । ४ । ७६ ॥** एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेकृत्य, निवचने कृत्वा । वाचं नियम्येत्यर्थः । **(७७८) नित्यं हस्ते पाणावुपयमने १ । ४ । ७७ ॥** कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये ।

---

जेकृत्येत्यपि तथैव । उपाजे, अन्वाजे—इत्यव्यये दुर्बलस्य बलाधाने वर्तेते । तदाह—**दुर्बलस्येति** ।

**(७७५) साक्षात्प्रभृतीनि च** । शेषपूरणेन सूत्रं व्याचष्टे—**कृञि वेति** । साक्षादित्यव्ययम् । **च्व्यर्थ इति** । अभूततद्भावे गम्ये सतीति वक्तव्यमित्यर्थः । **साक्षात्कृत्येति** । अप्रत्यक्षं प्रत्यक्षं कृत्वेत्वर्थः । गतित्वपक्षे क्त्वो ल्यप् । तत्र सुब्लुकमाशङ्क्याह—**मान्तत्वमिति** । लवणम्, उष्णम्, शीतम्, उदकम्, आम् इति पञ्चानां साक्षात्प्रभृतिगणे मान्तत्वं निपात्यत इत्यर्थः ।

**(७७६) अनत्याधाने** । उरसि, मनसि—इति विभक्तिप्रतिरूपके अव्यये गतिसंज्ञे वा स्तः अनत्याधाने । **उरसिकृत्येति** । गतित्वपक्षे क्त्वो ल्यप् । इह अत्याधानं न गम्यत इत्याह—**अभ्युपगम्येत्यर्थ इति** । **मनसिकृत्येति** । गतित्वपक्षे क्त्वो ल्यप् । इहापि नात्याधानं गम्यत इत्याह—**निश्चित्येत्यर्थ इति** । अत्याधानशब्दं विवृण्वन् तस्य प्रयोजनमाह—**अत्याधानमुपश्लेषणमिति** । संयोग इत्यर्थः । **उरसि कृत्वेति** । उरसि पाणिं निधाय शेत इत्यर्थः । अत्र पाणिसंश्लेषणावगमान्न गतिसंज्ञेति भावः ।

**(७७७) मध्येपदे** । गतित्वे तदभावे च त्रयाणामेदन्तत्वं निपात्यते । **मध्येकृत्येति** । गतिसमासे क्त्वो ल्यप् । मध्यं कृत्वेत्यर्थः । **पदेकृत्येति** । गतिसमासे क्त्वो ल्यप् । पदं कृत्वेत्यर्थः । **निवचनेकृत्येति** । वचनाभावं कृत्वेत्यर्थः । तदाह—**वाचं नियम्येत्यर्थ इति** । वचनस्य अभावः निवचनम् । अर्थाभावे अव्ययीभाव इति भावः ।

**(७७८) नित्यं हस्ते** । शेषपूरणेन सूत्रं व्याचष्टे—**कृञीति** । हस्ते इति पाणाविति च

---

१. "च्व्यन्तेषु तु पूर्वविप्रतिषेधात् ऊर्यादीति नित्यैव गतिसंज्ञा, तेन लवणीकृत्येत्यत्र न मान्तत्वम् । विकल्पसन्नियोगेन गणे तन्निपातनात्" ।—व्या० सि० सु० पृ० ८७८ ।

"यद्वा लवणशब्दस्य लवणमिति मान्तादेशः । तथा च पूर्वविप्रतिषेधं विनाऽपि त्रैशब्द्यसिद्धिः—लवणंकृत्य, लवणं कृत्वा, लवणीकृत्येति । च्व्यन्ताच्च्व्यन्तयोः पाक्षिके मान्तादेशे तुल्यं रूपम् । विकल्पस्य परत्वेऽपि तद्विमुक्ते च्व्यन्तस्य नित्यसंज्ञाप्रवृत्तेः ।—व्या० सि० सु० पृ० ८७८ ।

**हस्तेकृत्य, पाणौकृत्य । ( ७७९ ) प्राध्वं बन्धने १ । ४ । ७८ ॥ प्राध्वम् इत्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानुकूल्यं कृत्वेत्यर्थः । प्रार्थनादिना त्वानुकूल्यकरणे, प्राध्वं कृत्वा । ( ७८० ) जीविकोपनिषदावौपम्ये १ । ४ । ७९ ॥ जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । औपम्ये किम् ? जीविकां कृत्वा । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः । अत्र वार्तिकानि ।'प्रादयो गताद्यर्थे प्रथमया' ( वा १३३५ )। प्रगत आचार्यः प्राचार्यः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (वा १३३६) । अतिक्रान्तो मालामतिमालः ।**

---

शब्दौ कृञि नित्यं गतिसंज्ञौ भवतः । उपयमन इति यावत् । **हस्तेकृत्य, पाणौकृत्येति** । कन्यां स्वीकर्तुं पाणिं **गृहीत्वेत्यर्थः** । एदन्तत्वमौदन्तत्वं चानयोर्निपात्यते । उपयमने किम् ? हस्ते कृत्वा सुवर्णं गतः । अन्यदीयमिति बुद्ध्या दातुं परावृत्त इत्यर्थः ।

**( ७७९ ) प्राध्वं बन्धने** । प्राध्वमिति न द्वितीयान्तमित्याह—**प्राध्वमित्यव्ययमिति** । बन्धने गम्ये प्राध्वमित्यव्ययं गतिसञ्ज्ञकं स्यादित्यर्थः[1] । **प्राध्वंकृत्येति** । गतिसमासे क्त्वो ल्यप् । अत्र प्राध्वमिति मान्तमव्ययं बन्धनेन आनुकूल्ये वर्तते । तदाह—**बन्धनेति** । बन्धन-ग्रहणस्य प्रयोजनमाह—**प्रार्थनादिनेति** ।

**( ७८० ) जीविकोपनिष** । उपमैव औपम्यं, तस्मिन्विषये जीविकाशब्दः उपनिष-च्छब्दश्च कृञा योगे गतिसञ्ज्ञौ स्तः । **जीविकामिवेति** । अशनपानादिजीवनोपायो जीविका । तामिव अवश्यं कृत्वेत्यर्थः । **जीविकाकृत्येति** । गतिसमासे क्त्वो ल्यप् । **उपनिषदमिव कृत्वेति** । उपनिषत् वेदान्तभागः, तामिव रहसि ग्राह्यत्वेन कृत्वेत्यर्थः । **उपनिषत्कृत्वेति** । गतिसमासे क्त्वो ल्यप् । उभयत्रापि सुब्लुक् । तदेवं 'कुगतिप्रादयः' इत्यत्रत्यगतिसमासाः प्रपञ्चिताः । ननु गतिग्रहणेनैव सिद्धे प्रादिग्रहणं व्यर्थमित्यत आह—**प्रादिग्रहणमगत्यर्थमिति** । **सुपुरुष इति** । अत्र क्रियायोगाभावादगतित्वेऽपि समासः । सोः पूजार्थकत्वेऽपि धातुवाच्य-क्रियायोगाभावान्न गतित्वम् । भाष्ये तु 'कुगतिप्रादयः' इति सूत्रमपनीय तत्स्थाने 'स्वाङ्-स्वतिदुर्गतयः समस्यन्त इति वक्तव्यम्' इत्युक्त्वा 'कुब्राह्मणः, आकडारः, सुब्राह्मणः, अति-ब्राह्मणः, दुर्ब्राह्मणः दूरीकृत्य' इत्युदाहृतम् । स्वती पूजायाम्, दुर्निन्दायाम्, आङीषदर्थे, कुः पापार्थे इति सौनागव्याकरणवचनम् इति भाष्ये स्पष्टम् । **अत्र वार्तिकानीति** । 'प्रादयो गताद्यर्थे समस्यन्ते इति वक्तव्यम्' इति वार्तिकं पठित्वा तत्र व्यवस्थापकानि पञ्च वार्तिकानि सौनागव्याकरणसिद्धानि भाष्ये यानि पठितानि तानि प्रदर्श्यन्त इत्यर्थः । **प्रादय इति**[2] । गताद्यर्थे विद्यमानाः प्रादयः समस्यन्त इत्यर्थः । **प्रगत आचार्य इति** ।

---

१. चादौ प्राध्वमिति मान्त आनुकूल्यवृत्तिर्निपातः ।—व्या० सि० सु० पृ० ८८० ।

२. भाष्ये वार्तिकस्य स्वरूपं इत्थं वर्णितम्—"प्रादयः क्तार्थे" । प्रादयः क्तार्थे समस्यन्ते इति वक्तव्यम् । प्रगत आचार्यः—प्राचार्यः । प्रान्तेवासी, प्रपितामहः । एतदेव च सौनागैर्विस्तरतरकेण पठितम्" ।—म० भा० २-२-१८ ।

**'अवादयः क्रुष्टाद्यर्थे तृतीयया'** (वा १३३७)। **अवक्रुष्टः कोकिलया अवकोकिलः।** **'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या'** (वा १३३८)। **परिग्लानोऽध्ययनाय पर्यध्ययनः।** **'निरादयः क्रान्ताद्यर्थे पञ्चम्या'** ( वा १३३९ )। **निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः।** **'कर्मप्रवचनीयानां प्रतिषेधः'** (वा १३४०)। **वृक्षं प्रति।** ( ७८१ ) **तत्रोपपदं सप्तमीस्थम् ३ । १ । ९२ ॥** **सप्तम्यन्ते पदे 'कर्मणि'** ( सू २९१३ ) **इत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं**

---

प्रेत्यस्य विवरणं गत इति, गत आचार्यं इत्येव अस्वपदविग्रहः, नित्यसमासत्वात्। अभिगतो मुखम् अभिमुखः, प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि[1]। **अत्यादय इति।** क्रान्ताद्यर्थे अत्यादयः समस्यन्त इत्यर्थः। **अतिक्रान्तो मालामिति।** अतिशब्दः क्रान्ते वर्तते। क्रान्तो मालामित्यस्वपदविग्रहः। तत्र क्रमुधातोरतिक्रमणमर्थः[2]। **अतिमाल इति।** 'एकविभक्ति च' इति मालाशब्दस्य उपसर्जनत्वात् 'गोस्त्रियोः' इति ह्रस्वः। **अवादय इति।** क्रुष्टाद्यर्थे अवादयः समस्यन्त इत्यर्थः। **अवकोकिल इति।** कोकिलया आहूत इत्यर्थः[3]। **पर्यादय इति।** ग्लानाद्यर्थे पर्यादयः समस्यन्त इत्यर्थः। अध्ययनाय अध्ययनार्थं, तेन श्रान्त इत्यर्थः। परिरत्र ग्लाने वर्तते[4]। **निरादय इति।** क्रान्ताद्यर्थे निरादयः समस्यन्त इत्यर्थः[5]। **निष्कौशाम्बिरिति।** अतिमालवत् ह्रस्वः। निरित्यव्ययं निर्गमने वर्तते। **कर्मप्रवचनीयानां प्रतिषेध इति।** वार्तिकमेतत्। **वृक्षं प्रतीति।** 'लक्षणेत्थम्' इति कर्मप्रवचनीयत्वान्न प्रादिसमासः। इदं तु वार्तिकं भाष्ये प्रत्याख्यातम्।

( ७८१ ) अथोपपदसमासं वक्ष्यन्नुपपदसञ्ज्ञामाह—**तत्रोपपदं सप्तमीस्थम्।** अधिकारोऽयम्। सप्तमीति तदन्तग्रहणम्। सप्तम्यन्ते पदे वाच्यवाचकभावसम्बन्धेन तिष्ठतीति सप्तमीस्थम्। सप्तम्यन्तवाच्यमिति यावत्। धातोरित्यधिकारसूत्रादुत्तरसूत्रमिदम्। ततश्च तदधिकारान्तर्गतेषु 'कर्मण्यण्' इत्यादिसूत्रेषु यत्सप्तम्यन्तमुच्चारितं तदेव इह विवक्षितम्। एवञ्च तदुदाहरणे कुम्भं करोति कुम्भकार इत्यत्र सप्तम्यन्तवाच्यं कुम्भादीति पर्यवसन्नम्। कुम्भादेश्च उपपदसञ्ज्ञायां प्रयोजनाभावात्तद्वाचकपदेषु विश्राम्यति। तथा च धातोरित्यधिकारान्तर्गते कर्मणीत्यादिसूत्रे यत्सप्तम्यन्तं कर्मणीत्यादि तद्वाच्यं यत् कुम्भादि तद्वाचकं पदम् उपपदसञ्ज्ञं स्यादित्यधिकृतं वेदितव्यमित्यर्थः फलति। तदाह—**सप्तम्यन्ते**

---

१. एवं प्रगतः पितामहः > प्रपितामहः, प्रमातामहः इत्यादि सिद्धम्।

२. आदि पदादभिगतो मुखमभिमुखः, उद्गतो वेलामुद्वेलः, प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि सिद्धम्।

३. आदिपदात् परिणद्धो वीरुधा—परिवीरुत्, सन्नद्धा वर्मणा संवर्मेति च सिध्यति।

४. आदिपदात् उद्युक्तः संग्रामाय > उत्संग्रामः इति सिध्यति।

५ आदिपदात् उत्क्रान्तः कुलात् > उत्कुलः, निर्गतम् अङ्गुलिभ्यः > निरङ्गुलम् इत्यादिप्रयोगाः सिध्यन्ति।

**पदमुपपदसंज्ञं स्यात् । तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात् । ( ७८२ ) उपपदमतिङ् २ । २ । १९ ॥ उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः । इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । अतिङ्**

---

पद इत्यादिना । तत्र 'धातोः कर्मणः समानकर्तृकात्' इति, 'धातोरेकाचो हलादेः' इति 'धातोः' इति च क्रमेण त्रयो धात्वधिकाराः । तत्र प्रत्यासत्त्या तृतीयधात्वधिकारस्थसप्तम्यन्तस्यैव ग्रहणात् 'धातोरेकाचः' इत्यधिकारे 'च्लि लुङि' इत्यत्र सप्तम्यन्तं न गृह्यते । अन्यथा कर्मणीत्यादाविव लुङन्ते अभूदित्यादावुपपदे धातोः च्लिरित्यर्थः स्यात् । ननु तत्रेति व्यर्थम्, तृतीयधात्वधिकारस्य प्रकृतत्वादेव ग्रहणसम्भवादित्याशङ्क्याह—**तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यादिति** । अयमाशयः—तत्रेति भिन्नं वाक्यं क्रमव्यत्यासेन योज्यम् । सप्तमीस्थमुपपदसञ्ज्ञं स्यात् । तत्र, तस्मिन्सति इति चाधिकृतं वेदितव्यमिति । तथा चोपपदे सति वक्ष्यमाणः प्रत्ययः स्यादिति तत्रेत्यस्यार्थः फलति[1]। तथा च 'कर्मण्यण्' इत्यत्र इदं सूत्रमुपस्थितम् । कर्मणीति सप्तम्यन्तं प्रथमान्तत्वेन विपरिणम्यते । सप्तमीनिर्देशस्तु उपपदसञ्ज्ञाप्रवृत्त्यर्थः । धातोरण् स्यात् कर्तर्यर्थे, कर्मवाचकं तु कुम्भादिपदम् उपपदसञ्ज्ञं प्रत्येतव्यम्, तस्मिन्नुपपदे सत्येव अण् स्यादिति फलति । तस्मिन् सत्येवाण् स्यादित्यभावे तु कार इत्येवं केवलादपि धातोः कर्तर्यर्थे अण्प्रत्ययः स्यात् । कर्मणीति सप्तम्यन्तनिर्देशस्तु कुम्भकार इत्यादौ उपपदसञ्ज्ञां प्रापय्य 'उपपदमतिङ्' इति नित्यसमाससम्पादनेन कुम्भ इत्यस्य कार इत्यस्य च साधुत्वप्रापणार्थतया चरितार्थः । तस्मिन्नुपपदे सत्येवाण् स्यादित्युक्ते तु कुम्भाद्युपपदस्य अण्प्रत्ययोत्पत्तौ निमित्तत्वावगमान्न केवलादण्प्रत्ययः, उपपदसञ्ज्ञायाः प्रत्ययविधिसन्नियोगशिष्टत्वलाभात् । 'धः कर्मणि ष्ट्रन्', 'भुवो भावे' इत्यादौ सप्तम्यन्तमर्थनिर्देशपरमेव, व्याख्यानादिति भाष्यकैयटादिषु स्पष्टम् ।

( ७८२ ) **उपपदमतिङ्** । **सुबन्तमिति** । 'सुबामन्त्रिते' इत्यतस्तदनुवृत्तेरिति भावः । **समर्थेनेति** । प्रथमान्तं समर्थग्रहणं तृतीयान्ततया विपरिणम्यत इति भावः । **अतिङन्तश्चायं समास इति** । सूत्रे तिङिति तदन्तग्रहणमिति भावः । समासः तिङन्तघटितो न भवतीत्यर्थः । अतिङ् किम् ? कारको व्रजति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति व्रजावुपपदे कृञो ण्वुल्, अकादेशः । उपपदं समर्थेनेत्येतावत्युक्ते इहाप्युपपदसमासः स्यात् । अतः अतिङ्ग्रहणम् । न चैवं सुबित्यनुवृत्तेः प्रयोजनाभाव इति वाच्यं, चर्मकार इत्यत्र नलोपार्थकत्वात् । उपपदमतिङन्तं समर्थेन समस्यत इति व्याख्याने तु सुबिति नानुवर्तेत । ततश्च चर्मकार इत्यत्र नलोपो न स्यादिति भावः । **कुम्भमिति** । कुम्भं करोतीत्यर्थे 'कर्म-

---

१. "तत्र ग्रहणं विषयनिर्देशार्थम् । तत्रैतस्मिन् धात्वधिकारे इति । अन्यथा प्रतिसूत्रम् अधिकाराश्रयणे गौरवात्" । व्या० सि० सु० पृ० १२९९ ।

किम् ? मा भवान्भूत् । 'माङि लुङ्' ( १२१९ ) इति सप्तमीनिर्देशान्माङुपपदम् । अतिङ्ग्रहणं ज्ञापयति सुपा इत्येतन्नेहानुवर्तत इति । पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते । सुपा इति च निवृत्तम् । तथा च 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' ( प ७६ ) इति सिद्धम् । व्याघ्री । अश्वक्रीती । कच्छपी ।

---

ण्यण्' इति कर्मीभूतकुम्भवाचकपदे उपपदे कृञ्धातोः कर्तरि अण्प्रत्यये 'अचो ञ्णिति' इति वृद्धौ रपरत्वे कारशब्दः । तेन कुम्भशब्दस्य समासे कुम्भकारशब्द इत्यर्थः । ननु कुम्भं करोतीति कथं विग्रहप्रदर्शनम्, अतिङन्तः समास इत्युक्तत्वादित्यत आह—**कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यमिति** । लोके प्रयोगानर्हत्वमलौकिकत्वम् । 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्यरीत्या अलौकिकविग्रहवाक्य एव समासप्रवृत्तिः । कुम्भं करोतीति तदर्थप्रदर्शनमात्रमिति भावः । कुम्भ-अस् कार इत्यपपाठः, कृद्योगे षष्ठ्या विधानात् । **मा भवान् भूदिति** । अत्र भूदिति तिङन्तेन माङः समासनिवृत्त्यर्थमतिङ्ग्रहणमिति भावः । भवानिति पदं तु समासाभावसूचनाय मध्ये प्रयुक्तम् । ननु माङस्तृतीयधात्वधिकारे सप्तमीनिर्दिष्टत्वं तु अदृष्टं, येन तस्य उपपदत्वात् समासः प्रसज्येत इत्यत आह—**माङिति** । ननु अतिङ्ग्रहणं व्यर्थं, मा भवान् भूदित्यत्र सुपेत्यनुवृत्त्यैव समासनिवृत्तिसम्भवादित्यत आह—**अतिङ्ग्रहणमिति** । एवञ्च उपपदम् असुबन्तेन समस्यत इति फलितम् । गतिसमासोऽप्यसुबन्तेनेत्याह—**पूर्वसूत्र इति** । उत्तरसूत्रात्पूर्वसूत्रे अनुवृत्तिरपकर्षः । 'कुप्रादयः' इति 'गति' इति च योगो विभज्यते । कुप्रादयः सुबन्तेन समस्यन्ते । गतिस्तु समर्थेन समस्यते । अतिङन्तश्च समास इति व्याख्येयमिति यावत् । ततः किमित्यत आह—**तथा चेति** । गतिकारकोपपदानां कृदन्तैः सह सुबुत्पत्तेः प्राक् समासो वक्तव्य इति प्राचीनव्याकरणोक्तं सिद्धं भवतीत्यर्थः । यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः, तथाप्येकदेशानुमतिद्वारा प्राचीनपरिभाषेयं सिध्यति । अथ परिभाषायाः फलं दर्शयितुं गतिसमासमुदाहरति—**व्याघ्रीति** । व्याजिघ्रतीति व्याघ्रः । व्याङ्पूर्वात् घ्राधातोः 'आतश्चोपसर्गे' इति कः, 'आतो लोप इटि च' इत्याल्लोपः । 'पाघ्राध्माधेट्दृशश्शः' इति तु न भवति, 'जिघ्रतेः संज्ञायां नेति वाच्यम्' इति निषेधात् । आङो घ्रशब्देन गतिसमासः । आघ्रशब्देन वेः गतिसमासः । तत्र यदि घ्रशब्दस्य सुबन्तत्वमपेक्ष्येत तर्हि स्त्रीप्रत्यये उत्पन्ने सुबुत्पत्तिः स्यात्, स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्य 'कुत्सिते' इति सूत्रस्थभाष्यदर्शितस्य 'ङ्याप्प्रातिपदिकात्' इत्यत्रास्माभिः प्रपञ्चितत्वात् । ततश्च सुबुत्पत्तये लिङ्गसङ्ख्याकारकं क्रमेण अपेक्ष्यमिति प्रथमं लिङ्गसंयोगे सति अदन्तत्वात् टाप् स्यात् । न तु जातिलक्षणङीष्, घ्रशब्दमात्रस्य जातिवाचित्वाभावात् । ततश्च घ्राशब्देन सुबन्तेन समासे सति व्याघ्राशब्दस्य अदन्तत्वाभावात् जाति-

**( ७८३ ) अमैवाव्ययेन २ । २ । २० ॥** अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम् । नेह । 'कालसमयवेलासु तुमुन्' ( सू ३१७९ ) । कालः समयो वेला वा भोक्तुम् । अमैवेति किम् ? अग्रे भोजम्—अग्रे भुक्त्वा । 'विभाषाऽग्रेप्रथमपूर्वेषु' ( सू ३३४५ ) इति क्त्वाणमुलौ । अमा चान्येन च तुल्यविधानमेतत् । **( ७८४ ) तृतीयाप्रभृतीन्यन्यतरस्याम् २ । २ । २१ ॥** 'उपदंशस्तृतीयायाम्' ( सू ३३६८ )

---

लक्षणो ङीष् न स्यादिति भावः । यद्यप्युपपदत्वेनाप्येतत्सिद्धम्, तथापि गतित्वसम्भव-मात्रेणेदमित्याहुः । वस्तुतस्तु आङो घ्राशब्देन उपपदसमासः, 'आतश्चोपसर्गे' इति सप्तमीनिर्देशात् । वेस्तु आघ्रशब्देन गतिसमास इति तदंशे गतिसमासोदाहरणमित्याहुः । अथ कारकसमासमुदाहरति—**अश्वक्रीतीति** । अश्वेन क्रीतेति विग्रहे 'कर्तृकरणे कृता' इति समासः 'क्रीतात्करणपूर्वात्' इति ङीष् । सुबन्तेन समासे तु उक्तरीत्या पूर्वं टापि अदन्तत्वाभावात् ङीष् न स्यादिति भावः । उपपदसमासमुदाहरति—**कच्छपीति** । कच्छः तीरं, तेन तस्मिन् वा पिबतीति कच्छपी । 'सुपि स्थः' इत्यत्र 'सुपि' इति योगविभागात्कः, उपपदसमासः । तस्य सुबन्तापेक्षायाम् उक्तरीत्या टाबेव स्यात्, न तु जातिलक्षणङीषिति भावः ।

( ७८३ ) **अमैवाव्ययेन** । अमैवेत्यनन्तरं तुल्यविधानमित्यध्याहार्यम् । 'तुल्यार्थैर-तुलोपमाभ्याम्' इति तृतीया । **अमैव तुल्येति** । अम्प्रत्ययमात्रविधायकशास्त्रेण अमैव सह यस्य उपपदसञ्ज्ञा विधीयते तदुपपदमव्ययेन समस्यत इति यावत् । पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमित्याह—**तदेवेति** । विवरणवाक्ये द्वितीय एवकारो नियमलभ्यः, न तु सूत्रस्थः, तस्य अप्राप्ते अमा तुल्यविधानत्वे अवधारणार्थत्वात् । **स्वादुङ्कारमिति** । स्वादुं कृत्वेत्यर्थः । ओदनं भुङ्क्त इति शेषः । 'स्वादुमि णमुल्' इति णमुल्, स्वादुशब्दस्य मान्तत्वं निपातनात् । 'कृन्मेजन्तः' इत्यव्ययत्वम् । तदेवेति । नियमस्य प्रयोजनमाह—**नेहेति** । उपपदसमास इति शेषः । **भोक्तुमिति** । यद्यपि 'कालसमयवेलासु' इति सप्तमी-निर्देशात् कालसमयवेलानामुपपदत्वम्, तथापि कालादीनामुपपदसंज्ञा तुमुना तुल्यविधाने-नैव, न त्वमा । अतः कालादीनामुपपदत्वेपि न समास इत्यर्थः । **अमैवेति किमिति** ? अमैवे-त्येवकारः किमर्थं इति प्रश्नः । **अमा चान्येन चेति** । अम्प्रत्ययेन क्त्वाप्रत्ययेन च सह उप-पदसञ्ज्ञा अग्रेप्रथमपूर्वशब्दानां विहिता, ततश्च उपपदत्वस्य अमैव तुल्यविधानत्वाभावात् न उपपदसमास इति भावः ।

( ७८४ ) **तृतीयाप्रभृतीन्यन्यतरस्याम्** । तृतीयाशब्देन 'उपदंशस्तृतीयायाम्' इत्या-रभ्य 'अन्वच्चानुलोम्ये' इत्यन्तसूत्रोपात्तान्युपपदानि विवक्षितानि । अमेति, अव्ययेनेति चानुवर्तते, एवकारस्तु नानुवर्तते, अस्वरितत्वात् । अमेत्येतदव्ययविशेषणम् । तदाह—

इत्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते > मूलकोपदंशम्। उच्चैःकारम् । ( ७८५ ) **क्त्वा च २ । २ । २२ ॥** तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैःकृत्य—उच्चैः कृत्वा । 'अव्ययेऽयथाभिप्रेत' ( सू ३३८१ ) इति क्त्वा । तृतीयाप्रभृतीनीति किम् ? अलं कृत्वा, खलु कृत्वा । ( ७८६ ) **तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः ५ । ४ । ८६ ॥** सङ्ख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निर-

---

**उपदंशस्तृतीयायामित्यादिना ।** **मूलकेन उपदंशं भुङ्क्ते मूलकोपदंशमिति ।** 'उपदंशस्तृतीयायाम्' इति णमुल् । अमैव तुल्यविधानत्वात् पूर्वसूत्रेण नित्यं प्राप्ते विकल्पोऽयम् । ननु मूलकेनेत्यस्य भुङ्क्त इत्यत्रैवान्वयात् उपदंश इत्यत्रानन्वयादसामर्थ्यात् कथमिह समास इति चेत्, मैवम्—उपदंशनक्रियां प्रति हि मूलकस्य आर्थिकं कर्मत्वमादाय सामर्थ्यमुपपाद्यम् । तृतीया तु प्रधानक्रियानुरोधात् परत्वाच्चोपपाद्येत्यन्यत्र विस्तरः। **उच्चैःकारमिति ।** उच्चैः कृत्वेत्यत्र तु 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' । तत्र उच्चैःकारमित्यत्र उपपदत्वस्य अमैव तुल्वविधानत्वाभावात् 'अमैवाव्ययेन' इत्यप्राप्ते अनेन विकल्पः । समासपक्षे 'आदिर्णमुल्यन्यतरस्याम्' इति कृदुत्तरपदप्रकृतिस्वरः, आद्युदात्तत्वम् । असमासपक्षे तु उच्चैरिति फिट्सूत्रेण अन्तोदात्तत्वमिति फले भेदः । अमन्तेनेति किम् ? पर्याप्तो भोक्तुम् । 'पर्याप्तिवचनेषु' इति तुमुन् ।

( ७८५ ) **क्त्वा च ।** तृतीयाप्रभृतीनीति पूर्वसूत्रमनुवर्तते । क्त्वेति तृतीयार्थे प्रथमा । टायां 'सुपां सुलुक् पूर्वसवर्ण' इति पूर्वसवर्णदीर्घ इत्यपरे । तदाह—**तृतीयेति ।** ननु 'उपदंशस्तृतीयायाम्' इत्यतः प्रागेव समासकर्तृकयोरिति क्त्वाविधेः पाठात् कथमुच्चैः कृत्वेत्युदाहरणमित्यत आह—**अव्ययेऽयथेति ।** 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति सूत्रेणेत्यर्थः । **अलं कृत्वेति ।** 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इत्येतद् 'उपदंशस्तृतीयायाम्' इत्यतः पूर्वमेव पठितम् । अतः तद्विहितक्त्वो मान्तेन सह समासाभावात् न ल्यबिति भावः । **इत्युपपदसमासः ।**

( ७८६ ) अथ तत्पुरुषेषु असाधारणसमासान्तान् वक्तुमुपक्रमते—**तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः ।** 'अच्प्रत्यन्ववपूर्वात्' इत्यतः अजित्यनुवर्तते, समासान्त इत्यधिकृतम् । **तेन समासस्य अन्तावयव इति लभ्यते ।** प्रत्ययः परश्च इत्यधिकारात् अच्प्रत्ययस्य तत्पुरुषात् परत्वेऽपि तस्य तदवयवत्वात् अङ्गुलेरिति अवयवषष्ठी । अङ्गुलेरिति तत्पुरुषविशेषणं तदन्तविधिः । तदाह—**सङ्ख्याव्ययादेरिति ।** सङ्ख्या च अव्ययं च सङ्ख्याव्यये ते आदी यस्येति विग्रहः । **द्व्यङ्गुलमिति ।** 'तद्धितार्थ' इति द्विगुः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः', 'प्रमाणे लः', 'द्विगोर्नित्यम्' इति लुक् । द्व्यङ्गुलशब्दादचि तस्य

ङ्गुलम्। (७८७) **अहस्सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ५।४।८७॥** एभ्यो रात्रेरच्स्यात्, चात्सङ्ख्याव्ययादेः। 'अहर्ग्रहणं द्वन्द्वार्थम्' (वा ३३५३)। अहश्च रात्रिश्चाहोरात्रः। सर्वा रात्रिः सर्वरात्रः। पूर्वं रात्रेः पूर्वरात्रः। सङ्ख्यातरात्रः। पुण्यरात्रः। द्वयो रात्र्योः समाहारो द्विरात्रम्। अतिक्रान्तो रात्रिमतिरात्रः। (७८८) **राजाहस्सखिभ्यष्टच् ५।४।९१॥** एतदन्तात्तत्पुरुषाट्टच्स्यात्। परमराजः। अतिराजी।

---

तद्धितत्वात्तस्मिन् परे 'यस्येति च' इति इकारलोपः। **निरङ्गुलमिति**। 'निरादयः क्रान्ताद्यर्थे' इति समासः, अच्, इलोपः।

(७८७) **अहस्सर्वैकदेशसङ्ख्यातपुण्याच्च**। **एभ्यो रात्रेरिति**। अहन्, सर्व, एकदेश, सङ्ख्यात, पुण्य एभ्यः परस्य रात्रिशब्दस्येत्यर्थः। अहन्नादिपूर्वपदकस्य रात्र्यन्तस्य तत्पुरुषस्येति यावत्। ननु अहरादिः रात्र्यन्तस्तत्पुरुषो नास्त्येव। अह्नो रात्रिरिति वा अहश्चासौ रात्रिश्चेति वा असम्भवादित्यत आह—**अहर्ग्रहणं द्वन्द्वार्थमिति**[1]। न च ब्रह्मणो यदहः तस्यावयवभूता या मानुषी रात्रिरिति षष्ठीतत्पुरुषः सम्भवतीति वाच्यम्, अहर्ग्रहणं द्वन्द्वार्थमिति भाष्यप्रामाण्येन एवञ्जातीयकतत्पुरुषस्य प्रयोगाभावोन्नयनात्। **अहोरात्र इति**। द्वन्द्वादच्, इलोपः, 'जातिरप्राणिनाम्' इत्येकवत्त्वम्। 'स नपुंसकम्' इति बाधित्वा 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम्। **सर्वा रात्रिः सर्वरात्र इति**। सर्वा रात्रिरिति विग्रहे 'पूर्वकालैक' इति कर्मधारयः। अच्, इकारलोपः। 'रात्राह्न' इति पुंस्त्वम्। 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वम्। एकदेशेत्यर्थग्रहणमित्यभिप्रेत्योदाहरति—**पूर्वमिति**। पूर्वं रात्रेरिति विग्रहे 'पूर्वापराधरोत्तरम्' इत्येकदेशिसमासः। अच्, इलोपः। 'रात्राह्ना' इति पुंस्त्वम्। **सङ्ख्यातरात्र इति**। सङ्ख्याता रात्रिरिति विग्रहे कर्मधारयः। 'पुंवत्कर्मधारय' इति पुंवत्त्वम्। **पुण्यरात्र इति**। पुण्या रात्रिरिति विग्रहे कर्मधारयः। 'पुंवत्कर्मधारय' इति पुंवत्त्वम्। अच्, इलोपः। 'रात्राह्न' इति पुंस्त्वम्। **द्विरात्रमिति**। 'तद्धितार्थ' इति द्विगुः। सङ्ख्यादित्वादच्, इलोपः। 'सङ्ख्यापूर्वं रात्रं क्लीबम्' इति नपुंसकत्वम्। **अतिरात्र इति**। 'अत्यादयः क्रान्ताद्यर्थे' इति समासः। अव्ययादित्वादच्, 'इलोपः', 'रात्राह्न' इति पुंस्त्वम्।

(७८८) **राजाहस्सखिभ्यष्टच्**। 'तत्पुरुषस्याङ्गुलेः' इत्यतः 'तत्पुरुषस्येत्यनुवृत्तं पञ्चमीबहुवचनत्वेन विपरिणतं राजाहस्सखिभ्य इत्यनेन विशेष्यते। तदन्तविधिः, तदाह—**एतदन्तादिति**। **परमराज इति**। परमश्चासौ राजा चेति विग्रहः। समासान्तष्टच्। 'नस्तद्धिते' इति टिलोपः। **अतिराज इति**। अतिक्रान्तो राजानमिति विग्रहः।

---

१. "अहर्ग्रहणं द्वन्द्वार्थं द्रष्टव्ययम्। किमुच्यते द्वन्द्वार्थमिति? तत्पुरुषाभावात्। नह्रि रात्र्यन्तोऽहरादिस्तत्पुरुषोऽस्ति"।—महाभाष्यम्।

**कृष्णसखः। (७८९) अह्नष्टखोरेव ६।४।१४५॥ एतयोरेव परतोऽह्नष्टिलोपः स्यात्, नान्यत्र। उत्तमाहः। द्वे अहनी भृतो द्व्यहीनः क्रतुः। तद्धितार्थे द्विगुः। 'तमधीष्टः—' ( सू १७४४ ) इत्यधिकारे 'द्विगोर्वा' इत्यनुवृत्तौ 'रात्र्यहस्संवत्सराच्च' ( सू १७५१ ) इति खः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह। मद्राणां राज्ञी मद्रराज्ञी। ( ७९० )**

---

'अत्यादयः' इति समासः। टचि टिलोपः। कृष्णसख इति। कृष्णस्य सखेति विग्रहः। समासान्तष्टच्। 'यस्येति च' इति इकारलोपः।

**( ७८९ ) अह्नष्टखोः।** शेषपूरणेन सूत्रं व्याचष्टे—**टिलोपः स्यादिति।** टेरित्यनुवर्तते, 'अल्लोपोऽनः' इत्यस्मात् लोप इति चेति भावः। 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदमित्याह—**नान्यत्रेति।** एवकारस्तु अह्न एव टखोरिति विपरीतनियमव्यावृत्त्यर्थः। टखोरेवेति किम्? अह्ना निर्वृत्तम् आह्निकम्. 'कालाट्ठञ्' इत्यधिकारे 'तेन निर्वृत्तम्' इति ठञ्। टिलोपाभावादल्लोपः। टप्रत्यये उदाहरति—**उत्तमाह इति।** उत्तमं च तदहश्चेति विशेषणसमासः। 'राजाहस्सखिभ्यष्टच्' इति टच् 'अह्नष्टखोरेव' इति प्रकृतसूत्रेण टिलोपः 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम्। खे उदाहरति—**द्वे अहनी भृत इति।** अत्यन्तसंयोगे द्वितीया। भृतः परिक्रीत इत्यर्थः। द्व्यहीन इत्यत्र प्रक्रियां दर्शयति—**तद्धितार्थे द्विगुरिति।** कोऽत्र तद्धित इत्यत आह—**तमधीष्ट इत्यादि।** तथा च द्व्यहन्शब्दात् खस्य ईनादेशे 'अह्नष्टखोरेव' इति टिलोपे द्व्यहीन इति रूपमित्यर्थः। नन्वत्र 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः कुतो न स्यात्। न च खे टिलोपविधिसामर्थ्यान्नाह्नादेश इति वाच्यम्। अहीन इत्यत्र खे टिलोपविधेः चरितार्थत्वात् इति चेत्, न—समासान्ते पर एवाह्नादेशविधानात्। प्रकृते तु समासान्तविधेरनित्यत्वात् 'राजाहस्सखिभ्यः' इति न टच्। यद्यपि उत्तमाह इत्यत्र द्व्यहीन इत्यत्र च 'नस्तद्धिते' इत्येव टिलोपः सिद्धः। तथापि आह्निकमित्यादावावश्यकस्य नियमविधेर्विधिमुखेनापि प्रवृत्त्यभ्युपगमादिह तदुपन्यासः। ननु मद्राणां राज्ञी मद्रराज्ञीत्यत्रापि लिङ्गविशिष्टपरिभाषया 'राजाहस्सखिभ्यः' इति टच् स्यादित्याशङ्क्याह—**लिङ्गेति। अनित्यत्वादिति।** समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषा नेति 'ङ्याप्प्रातिपदिकात्' इत्यत्र भाष्ये[1] उक्तत्वादिति भावः।

---

१. पूर्वं तावत् "ङ्याप्प्रातिकात्" ४-१-१ सूत्रे भाष्यकारेण लिङ्गविशिष्टपरिभाषायाः प्रयोजनानि दर्शयता अस्याः समासान्तविधावस्वीकारे 'समासान्तेषु च अतिप्रसङ्गो भवति' इति कथितम्। तथा हि मद्राज्ञीत्यत्र ईकारान्तात् टचः प्रसक्त्या पुंवद्भाव-टिलोपयोः प्राप्तिसंभवेन मद्रराजीत्यनिष्टरूपापत्तिरपि दर्शिता। अनया रीत्या दोषाणां साकल्येन परिगणनं कृतम्। तस्मात् अस्याः परिभाषायाः अनिवार्यत्वं नैव स्वीकृतम् भाष्यकारेण। आवश्यकस्थलेषु एषा स्वीकरणीया। अन्ते "प्रतिविधेयं च दोषेषु" इति कथयता मरीचः प्रदर्शिता। विस्तरस्तु भाष्ये द्रष्टव्यः।

**अह्नोऽह्न एतेभ्यः ५ । ४ । ८८ ॥** सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशः स्यात् समासान्ते परे । ( ७९१ ) **अह्नोऽदन्तात् ८ । ४ । ७ ॥** अदन्तपूर्वपदस्थाद्रेफात्परस्याऽह्नादेशस्य नस्य णः स्यात् । सर्वाह्णः । पूर्वाह्णः । सङ्ख्याताह्नः । द्वयोरह्नोर्भवः । 'कालाट्ठञ्' ( सू १३८१ ) । 'द्विगोर्लुगनपत्ये' ( सू १०८० ) इति ठञो लुक् । द्वयह्नः । स्त्रियामदन्तत्वाट्टाप् । द्वयह्ना । द्वयह्नप्रियः । अत्यह्नः । ( ७९२ ) **क्षुभ्नादिषु च**

---

मद्राराज्ञीति । न च टचि सत्यपि 'यस्येति च' इतीकारलोपे मद्रराज्ञशब्दात् टित्त्वात् ङीपि मद्राराज्ञीति निर्बाधमिति वाच्यम्, टचि हि सति 'भस्याढे तद्धिते' इति पुंवत्त्वे टिलोपे मद्राराजी इति स्यादिति भावः ।

( ७९० ) **अह्नोऽह्न एतेभ्यः** । पूर्वसूत्रे अहस्सर्वैकदेशसङ्ख्यातपुण्यशब्दा निर्दिष्टाः । तत्र चकारेण सङ्ख्याव्यये अनुकृष्टे । अहश्शब्दवर्जं ते सर्वे एतच्छब्देन परामृश्यन्ते, न त्वहश्शब्दः, अहश्शब्दात् परस्य अहन्शब्दस्य तत्पुरुषे असम्भवादित्यभिप्रेत्य व्याचष्टे—**सर्वादिभ्य इति** । **समासान्ते पर इति** । एतत्तु प्रकरणाल्लब्धम् ।

( ७९१ ) **अह्नोऽदन्तात्** । 'पूर्वपदात्संज्ञायाम्' इत्यतः पूर्वपदादित्यनुवृत्तम् । अदन्तादित्यत्रान्वेति । 'रषाभ्यां नो णः' इति सूत्रं षकारवर्जमनुवर्तते । पूर्वपदादित्यनेन पूर्वपदस्थादिति विवक्षितम् । तदाह—**अदन्तपूर्वेति** । तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टार्थम् । लक्षेषु अहस्सु भवो लक्षाह्न इत्यत्र णत्वार्थं षादित्यपि बोध्यम् । समासान्ते पर इति किम् ? द्वे अहनी भृतो द्वयहीनः । अत्र समासान्तविधेरनित्यत्वात् टजभावे अह्नादेशो न । **सर्वाह्ण इति** । सर्वमहरिति विग्रहे 'पूर्वकाल' इति समासे 'राजाहस्सखिभ्यः' इति टच्, अह्नादेशः, णत्वं, 'रात्राह्नाहाः' इति पुंस्त्वम् । **पूर्वाह्ण इति** । समासादि सर्वाह्णवत् । **संख्याताह्न इति** । संख्यातमहरिति विग्रहः । विशेषणसमासः, टच्, अह्नादेशः । निमित्ताभावान्न णत्वम् । पुण्यपूर्वस्य त्वग्रे वक्ष्यते । संख्यापूर्वस्य उदाहरति—**द्वयोरह्नोरित्यादि** । **द्वयह्न इति** । तद्धितार्थे द्विगुः । टच् । ततो भवार्थे ठञ्, तस्य लुक्, अह्नादेशः । प्रसङ्गादाह—**स्त्रियामिति** । **द्वयह्नेति** । द्वयोरह्नोर्भवेत्यर्थः । ठञ् लुक् च पूर्ववत् । 'अपरिमाणबिस्त' इति न ङीप् । ठञ्निमित्तस्तु ङीप् नेत्यपरिमाणबिस्तेत्यत्रोक्तम्[1] । टचष्टित्त्वेऽप्युपसर्जनत्वात् 'ठिड्ढ' इति न ङीप् । वस्तुतस्तु स्त्रीत्वमेवात्र नास्ति । 'रात्राह्नाहाः पुंसि' इत्युक्तेरिति शब्देन्दुशेखरे प्रपञ्चितम् । सङ्ख्यापूर्वस्योदाहरणान्तरमाह—**द्वयह्नप्रिय इति** ।

---

१. 'न च इह ठञन्तत्वात् ङीप् स्यादिति शङ्क्यम्, ठञो लुप्तत्वात्तस्या अप्रवृत्तेः । न च प्रत्ययलक्षणम्, वर्णाश्रयत्वात् । ठञो यः अकारः तदन्तात् ङीप् इति व्याख्यातत्वात् । न चैवमपि टजन्तत्वात् ङीप् स्यादेवेति वाच्यम्, टचः समासान्ततया तदन्तस्य तद्धितार्थे प्रति उपसर्जनत्वात्' । अत एव आपिशलिना श्रोक्तमधीयाना ब्राह्मणी आपिशलिरुदाहृता भाष्ये ।

८।४।३९॥ एषु णत्वं न स्यात्। दीर्घाह्नी प्रावृट्। एवं चैतदर्थमह्न इत्यदन्तानुकरणक्लेशो न कर्तव्यः। 'प्रातिपदिकान्त—' (सू १०५५) इति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात्। अदन्तादिति तपरकरणान्नेह—परागतमहः पराह्नः।

**(७९३) न सङ्ख्यादेः समाहारे** ५।४।८९॥ समाहारे वर्तमानस्य सङ्ख्यादेरह्नादेशो न स्यात्। सङ्ख्यादेः इति स्पष्टार्थम्। द्वयोरह्नोः समाहारो द्व्यहः। त्र्यहः।

---

द्वे अहनी प्रिये यस्येति विग्रहः। तद्धितार्थेत्युत्तरपदे द्विगुः। टच् अह्नादेश इति भावः। अव्ययपूर्वस्योदाहरति—**अत्यह्न** इति। अहरतिक्रान्त इति विग्रहः। अत्यादय इति समासः। टच् अह्नादेश इति भावः।

(७९२) **क्षुभ्नादिषु च**। रषाभ्यामित्यतो ण इति 'न भाभूपूकमि' इत्यतो नेति चानुवर्तते। तदाह—**एष्विति**। **दीर्घाह्नी प्रावृडिति**। वर्षर्तौ प्रावृट्शब्दः स्त्रीलिङ्गः। 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः। दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः। 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप् 'अल्लोपोऽनः' इत्युपधालोपः। 'अह्नोऽदन्तात्' इति णत्वं तु क्षुभ्नादित्वान्नेति भावः। ननु क्षुभ्नादिषु दीर्घाह्नीत्यस्य पाठो व्यर्थः 'अह्नोऽदन्तात्' इत्यत्र हि अह्न इत्यदन्तात् षष्ठ्यर्थे प्रथमा। अदन्तपूर्वपदस्थान्निमित्तात् परस्य अह्नशब्दस्य नस्य णत्वं स्यादिति तदर्थः। दीर्घाह्नीत्यत्र च अह्नादेशस्याप्रसक्त्या अदन्तत्वाभावादेव णत्वस्याप्राप्तौ किं तन्निवृत्त्यर्थेन क्षुभ्नादिपाठेनेत्यत आह—**एवञ्चेति**। एवं सति दीर्घाह्नीशब्दस्य क्षुभ्नादिपाठे सति, एतदर्थम् 'अह्नोऽदन्तात्' इति णत्वनिवृत्त्यर्थम्, अह्न इत्यस्य अदन्तत्वानुसरणं षष्ठ्यर्थे व्यत्ययेन प्रथमानुसरणं क्लेशावहं न कर्तव्यमित्यर्थः। क्षुभ्नादिपाठादेव णत्वनिवृत्तिसिद्धेरिति भावः[1]। ननु दीर्घाह्नीत्यस्य णत्वाभावाय किं क्षुभ्नादिपाठोऽभ्युपगम्यताम् उत अह्न इत्यस्य अदन्तत्वमित्यत्र विनिगमनाविरह इत्यत आह—**प्रातिपदिकान्तेति**। अथ 'अह्नोऽदन्तात्' इत्यत्र पूर्वपदविशेषणे अदन्तादिति तपरत्वस्य प्रयोजनमाह—**अदन्तादिति**। **पराह्न इति**। 'प्रादयो गताद्यर्थे' इति समासः, टच्, अव्ययात्परत्वादह्नादेशः। परेति पूर्वपदस्यादन्तत्वाभावात् न णत्वमिति भावः।

(७९३) **न सङ्ख्यादेः समाहारे**। **अह्नादेश इति**। 'अह्नोऽह्नः' इत्यतस्तदनुवृत्तेरिति भावः। ननु संख्यादिभिन्नस्य तत्पुरुषस्य समाहारे अभावादेव सिद्धे संख्यादेरिति व्यर्थमित्यत आह—**स्पष्टार्थमिति**। **द्व्यह इति**। समाहारे द्विगुः। टच्, 'रात्राह्न' इति पुंस्त्वम्। सङ्ख्यात्वात्प्राप्तस्य अह्नादेशस्य निषेधः। **त्र्यह इति**। त्रयाणामह्नां समाहार इति विग्रहः। समासादि द्व्यहवत्।

---

१ "अदन्ताददन्तस्येति वक्तव्यम्। इह मा भूत—दीर्घाह्नी शरदिति। तर्हि वक्तव्यम्। न वक्तव्यम्। नैषा अह्न-शब्दात् षष्ठी। का तर्हि? अह्नशब्दात् प्रथमा। ... अथवा युवादिषु पाठः करिष्यते"। महाभाष्यम्—८·४·७

**( ७९४ ) उत्तमैकाभ्यां च ५ । ४ । ९० ।।** आभ्यामह्लादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । 'पुण्यैकाभ्याम्' इत्येव सूत्रयितुमुचितम् । पुण्याहम् । सुदिनाहम् । सुदिनशब्दः प्रशस्तवाची । एकाहः । 'उत्तमग्रहणमुपान्त्यस्यापि सङ्ग्रहार्थम्' इत्येके । सङ्ख्याताहः । **( ७९५ ) अग्राख्यायामुरसः ५ । ४ । ९३ ।।** टच्स्यात् । अश्वानामुर इव अश्वोरसम् । मुख्योऽश्व इत्यर्थः । **(७९६) अनोऽश्मायस्सरसां जातिसंज्ञयोः ५।४।९४ ।।** टच्स्याज्जातौ संज्ञायां च । उपानसम्, अमृताश्मः, कालायसम्, मण्डूकसरसम् इति जातिः । महानसम्, पिण्डाश्मः, लोहितायसम्, जलसरसम् इति संज्ञा । ( ७९७ )

---

**( ७९४ ) उत्तमैकाभ्यां च ।** ननु उत्तमशब्दात् परस्याहन्शब्दस्य अह्लादेशाप्रसक्तेरुत्तमग्रहणं व्यर्थमित्यत आह—**उत्तमशब्द इति ।** उत्तमशब्दः अन्त्ये वर्तते । यथा द्वादशाहे 'उदयनीयातिरात्र उत्तममहः' इति अन्त्यमिति गम्यते । 'अहस्सर्वैकदेशसङ्ख्यातपुण्या' दित्युपात्तेषु अन्त्यः पुण्यशब्दो विवक्षित इत्यर्थः । तर्हि पुण्यैकाभ्याम् इत्येव कुतो न सूचितमित्याशङ्क्य स्वतन्त्रेच्छत्वान्महर्षेरित्याह—**पुण्यैकाभ्यामित्येवेति । पुण्याहमिति ।** पुण्यमहरिति विग्रहे विशेषणसमासः, टच्, टिलोपः, 'पुण्यसुदिनाभ्यां च' इति नपुंसकत्वम् । **एकाह इति ।** एकमहरिति विग्रहे 'पूर्वकाल' इति समासः । टच्, टिलोपः । **उपान्त्यस्यापीति ।** लक्षणयेति शेषः । पुण्येत्यनुक्त्वा उत्तमग्रहणमेव लक्षणाबीजम्, उत्तमे च एकं चेति द्वन्द्वः, सौत्रं द्विवचनमिति भावः । **सङ्ख्याताह इति ।** सङ्ख्यातमहरिति विग्रहे विशेषणसमासः, टच्, टिलोपः । 'रात्राह्नाहा' इति पुंस्त्वम् । उपान्त्यसङ्ख्यातशब्दपूर्वत्वात् नाह्लादेशः ।

**( ७९५ ) अग्राख्यायामुरसः ।** शेषपूरणेन सूत्रं व्याचष्टे—**टच् स्यादिति ।** पञ्चम्यर्थे सप्तमी । अग्रं प्रधानं तद्वाची य उरश्शब्दः तदन्तात्तत्पुरुषाट्टच् स्यादित्यर्थः । 'अग्र्याख्यायाम्' इति पाठान्तरम् । अग्रे भवमग्र्यं, मुख्यमिति यावत् । **अश्वानामुर इवेति ।** उरो यथा प्रधानं तथेत्यर्थः । उरश्शब्दस्य मुख्ये वृत्तौ लक्षणाबीजमिदम् । **अश्वोरसमिति ।** उरश्शब्देन मुख्यवाचिना षष्ठीसमासः, टच्, 'परवल्लिङ्गम्' इति नपुंसकत्वम् । अग्राख्यायामिति किम् ? देवदत्तस्योरः देवदत्तोरः ।

**( ७९६ ) अनोऽश्मायस् । उपानसमिति ।** उपगतमन इति प्रादिसमासः । **अमृताश्म इति ।** अमृतः अश्मेति विग्रहः । टचि टिलोपः । **कालायसमिति ।** कालम् अय इति विग्रहः, टच्, 'परवल्लिङ्गम्' इति नपुंसकत्वम् । **मण्डूकसरसमिति ।** षष्ठीसमासः । टच् । जातिविशेषा एते[१] । महानसं, पिण्डाश्मः, लोहितायसं, जलसरसमिति संज्ञाविशेषाः ।

---

१. रूढानां शब्दानां यथाकथञ्चिद् व्युत्पादनं कर्तव्यम् इत्ययमेवार्थः स्वीकार्यः ।—ल० श० शे० टीका—भैरवी ।

**ग्रामकौटाभ्यां च तक्ष्णः ५ । ४ । ९५ ॥** ग्रामस्य तक्षा ग्रामतक्षः । साधारण इत्यर्थः । कुट्यां भवः कौटः—स्वतन्त्रः । स चासौ तक्षा च कौटतक्षः । ( ७९८ ) **अतेः शुनः ५ । ४ । ९६ ॥** अतिश्वो वराहः । अतिश्वी सेवा । ( ७९९ ) **उपमानादप्राणिषु ५ । ४ । ९७ ॥** अप्राणिविषयकोपमानवाचिनः शुनष्टच्स्यात् । आकर्षः श्वेवाकर्षश्वः । अप्राणिषु किम् ? वानरः इवेव वानरश्वा । ( ८०० ) **उत्तरमृगपूर्वाच्च सक्थ्नः ५ । ४ । ९८ ॥** चादुपमानात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि फलकसक्थम् । ( ८०१ ) **नावो द्विगोः ५ । ४ । ९९ ॥** नौशब्दान्ताद् द्विगोष्टच्स्यात्, न तु तद्धितलुकि । द्वाभ्यां नौभ्यामागतो द्विनावरूप्यः । 'द्विगोर्लुगनपत्ये' ( सू १०८० ) इत्यत्र अचि इत्यस्यापकर्षणाद्धलादेर्न लुक् । पञ्चनावप्रियः । द्विनावम् ।

---

( ७९७ ) **ग्रामकौटाभ्यां च तक्ष्णः ।** आभ्यां टजिति । ग्रामकौटाभ्यां परो यस्तक्षन्शब्दः तदन्तात्तत्पुरुषाट्टच् स्यादित्यर्थः । **ग्रामतक्ष इति ।** टचि टिलोपः । **साधारण इति ।** ग्रामे यावन्तो जनाः सन्ति तावतां विधेय इत्यर्थः । **कुट्यां भव इति ।** कुटीमेकां क्रयादिना सम्पाद्य तत्र यो वसति, न तु परकीयभूमिप्रदेशे, स कौट इत्यर्थः । फलितमाह—**स्वतन्त्र इति । कौटतक्ष इति ।** टचि टिलोपः ।

( ७९८ ) **अतेश्शुनः ।** अतीत्यव्ययात् परो यः श्वन्शब्दः तदन्तात्तत्पुरुषाट्टजित्यर्थः । **अतिश्व इति ।** श्वानमतिक्रान्त इति विग्रहः । 'अत्यादय' इति समासः । टचि टिलोपः । श्वापेक्षयाधिकवेगवान् वराह इत्यर्थः । **अतिश्वी सेवेति ।** श्वानमतिक्रान्तेत्यर्थः, श्वापेक्षया नीचा सेवेति यावत्, टच्, टिलोपः । टित्त्वात् ङीप्, यस्येति चेत्यकारलोपः ।

( ७९९ ) **उपमानादप्राणिषु । आकर्षः श्वेवेति ।** आकृष्यते कुसूलादिगतधान्यमनेनेत्याकर्षः । पश्वाङ्गुलो दारुविशेषः । 'उपमितं व्याघ्रादिभिः' इति समासः । टच्, टिलोपः, आकर्षश्वः इति रूपम् । उपमानात् किम् ? शुनो निष्क्रान्तः निश्श्वा ।

( ८०० ) **उत्तरमृग ।** उत्तर, मृग, पूर्व एभ्यः उपमानाच्च परो यः सक्थिशब्दः तदन्तात्तत्पुरुषाट्टच् स्यादित्यर्थः । **उत्तरसक्थमिति ।** उत्तरं सक्थीति विग्रहः । पूर्वं सक्थीति विग्रहे 'पूर्वकाल' इति समासः । **फलसक्थमिति ।** फलकमिव सक्थीति विग्रहे मयूरव्यंसकादित्वात् इति समासः । सर्वत्र टच्, टिलोपः ।

( ८०१ ) **नावो द्विगोः । न तु तद्धितलुकीति ।** 'गोरतद्धितलुकि' इत्यतो मण्डूकप्लुत्या तदनुवृत्तेरिति भावः । **द्विनावरूप्य इति ।** तद्धितार्थे समासः, टच्, आवादेशः । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः, तस्य 'द्विगोर्लुगनपत्ये' इति लुकमाशंक्याह—**द्विगोर्लुगनपत्ये इत्यत्रेति । अपकर्षणादिति ।** 'गोत्रेऽलुगचि' इत्युत्तरसूत्रादित्यर्थः । **पञ्चनावप्रिय इति ।** पञ्च नावः प्रियाः यस्येति विग्रहे उत्तरपदे द्विगुः, टच्, आवादेशः, **द्विनावमिति ।**

त्रिनावम् । अतद्धितलुकीति किम् ? पञ्चभिर्नौभिः क्रीतः पञ्चनौः । ( ८०२ ) **अर्धाच्च** ५ । ४ । १०० ।। अर्धान्नावष्टच्स्यात् । नावोऽर्धम्–अर्धनावम् । क्लीबत्वं लोकात् । ( ८०३ ) **खार्याः प्राचाम्** ५ । ४ । १०१ ।। द्विगोरर्धाच्च खार्याष्टज्वा स्यात् । द्विखारम्—द्विखारि । अर्धखारम्–अर्धखारि(री) । ( ८०४ ) **द्वित्रिभ्यामञ्जलेः** ५।४।१०२।। टज्वा स्याद् द्विगौ । द्व्यञ्जलम्–द्व्यञ्जलि । अतद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः । ( ८०५ ) **ब्रह्मणो जानपदाख्यायाम्** ५ । ४ । १०४ ।। ब्रह्मान्तात्तत्पुरुषाट्टच्स्यात्समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । ( ८०६ ) **कुम-**

---

द्वयोः नावोः समाहार इति विग्रहे द्विगुः, टच्, आवादेशः, 'स नपुंसकम्' इति नपुंसकत्वम् । **त्रिनावमिति** । तिसृणां नावां समाहार इति विग्रहः । द्विनाववत् । **पञ्चनौरिति** । तद्धितार्थे समासः । आर्हीयष्ठक्, 'अध्यर्ध' इति लुक् ।

( ८०२ ) **अर्धाच्च** । अर्धशब्दात् परो यो नौशब्दः तदन्तात् तत्पुरुषाट्टजित्यर्थः । **अर्धनावमिति** । 'अर्धं नपुंसकम्' इति समासः, टच्, आवादेशः । अत्र 'परवल्लिङ्गम्' इति स्त्रीत्वमाशङ्क्याह—**क्लीबत्वं लोकादिति** ।

( ८०३ ) **खार्याः प्राचाम्** । खारीशब्दान्तात् द्विगोः, अर्धपूर्वकात् खारीशब्दान्तात्तत्पुरुषाच्चेत्यर्थः । **द्विखारमिति** । द्वयोः खार्योः समाहार इति विग्रहे द्विगुः । टच्, 'यस्येति च' । 'स 'नपुंसकम्' इति नपुंसकत्वम्' । टजभावपक्षे 'स नपुंसकम्' इति नपुंसकत्वान्नपुंसकह्रस्वः । **अर्धखारमिति** । खार्या अर्धमिति विग्रहः । 'अर्धं नपुंसकम्' इति समासः, टच्, यस्येति च । क्लीबत्वं लोकात् । **अर्धखारीति** । पूर्ववत् समासः । टजभावपक्षे 'परवल्लिङ्गम्' इति स्त्रीत्वम् । एकविभक्तावषष्ठ्यन्तवचनादुपसर्जनत्वाभावान्न ह्रस्वः । अर्धखारि इति क्वचिद्ध्रस्वान्तपाठः । तदा क्लीबत्वं लोकात्, ततो नपुंसकह्रस्वः ।

( ८०४ ) **द्वित्रिभ्यामञ्जलेः** । शेषपूरणेन सूत्रं व्याचष्टे—**टज्वा स्यादिति** । **द्विगाविति** । **द्व्यञ्जलमिति** । द्वयोरञ्जल्योः समाहार इति विग्रहे द्विगुः, टच्, 'यस्येति च' 'स नपुंसकम्' । **द्व्यञ्जलिरिति** । समाहारे द्विगु । टजभावे सति नपुंसकह्रस्वत्वम् । **अतद्धितलुकीत्येवेति** । अनुवर्तत एवेत्यर्थः । **अञ्जलिभ्यां क्रीत इति** । अञ्जलिशब्दः अञ्जलिपरिमितधान्यादौ वर्तते, केवलस्याञ्जले. मूल्यत्वासम्भवात् । परिणामत्वात् ठञ् । 'अध्यर्ध' इति तस्य लुक् ।

( ८०५ ) **ब्रह्मणो जानपदाख्यायाम्** । जनपदे भवो जानपदः, भावप्रधानो निर्देशः । तस्य केनाख्यायत इत्याकाङ्क्षायाम् प्रकृतत्वात् समासेनेति लभ्यते । तदाह—**समासेन जानपदत्वमाख्यायते चेदिति** । जानपदत्वमित्यनन्तरं ब्रह्मण इति शेषः । **सुराष्ट्रे ब्रह्मेति** । **ब्रह्मशब्दोऽत्र पुंलिङ्गः । ब्रह्मा विप्रः** । 'वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः'

**कुमहद्भ्यामन्यतरस्याम्** ५।४।१०५॥ आभ्यां ब्रह्मणो वा टच्स्यात्तत्पुरुषे। कुत्सितो ब्रह्मा कुब्रह्मः-कुब्रह्मा। (८०७) **आन्महतः समानाधिकरणजातीययोः** ६।३।४६॥ महतः आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाब्रह्मः—महाब्रह्मा। महादेवः। महाजातीयः। समानाधिकरणे किम्? महतः सेवा महत्सेवा। लाक्षणिकं विहाय प्रतिपदोक्तः 'सन्महत्' (सू० ७४०) इति समासो ग्रहीष्यत इति चेत्, महाबाहुः न स्यात्। तस्मात् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य' (प ११४) इति परिभाषा नेह प्रवर्तते। समानाधिकरणग्रहणसामर्थ्यात्। आत्' इति योगविभागादात्वं,

---

इत्यमरः। सप्तमीति योगविभागात् समासः। टच्, टिलोपः, 'परवल्लिङ्गम्' इति पुंस्त्वम्। जानपदेति किम्? देवब्रह्मा नारदः।

(८०६) **कुमहद्भ्यामन्यतरस्याम्**। **कुब्रह्मेति**। टजभावे रूपम्। 'कुगतिप्रादयः' इति समासः। **कुब्रह्म इति**। टचि रूपं, टिलोपः।

(८०७) अथ महत्पूर्वस्य टज्विकल्पमुदाहरिष्यन् विशेषमाह—**आन्महतः**। 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारस्थमिदं सूत्रम्। उत्तरपदे इत्यनुवृत्तं समानाधिकरणपदे अन्वेति, न तु जातीय इति तस्य प्रत्ययत्वात्। तदाह—**महत आत्वमित्यादिना**। **महाब्रह्म इति**। महांश्चासौ ब्रह्मा चेति विग्रहः। 'सन्महत्' इत्यादिना समासः। आत्वम्। सवर्णदीर्घः। 'कुमहद्भ्याम्' इति टच्। टिलोपः, 'परवल्लिङ्गम्' इति पुंस्त्वम्। **महाब्रह्मेति**। टजभावे आत्वे रूपम्। अथ प्रसङ्गादुक्तमात्त्वविधिं प्रपञ्चयिष्यन् समानाधिकरणे पुनरुदाहरति—**महादेव इति**। जातीये उदाहरति—**महाजातीय इति**। महत्सदृश इत्यर्थः। प्रकारवचने जातीयर् आत्वम्, सवर्णदीर्घः। **समानाधिकरणे किमिति?** 'आन्महतो जातीये चे'त्येवास्तु चकारादुत्तरपदसमुच्चये सति महत आत्वम् स्यात्। उत्तरपदे जातीये च परत इत्यर्थलाभादेव महादेव इत्यादिसिद्धेः, किं समानाधिकरणेनेति प्रश्नः। **महतः सेवा महत्सेवेति**। अत्र षष्ठीसमासे आत्वनिवृत्त्यर्थं समानाधिकरणग्रहणमिति भावः। ननु षष्ठीसमासो लाक्षणिकः, समस्यमानपदं विशिष्य अनुच्चार्य समान्यशास्त्रत एव निर्वर्तितत्वात्। 'सन्महत्' इत्ययं समासस्तु सन्महदादिशब्दं समस्यमानं विशिष्योच्चार्य विहितत्वात् प्रतिपदोक्तः। ततश्च लक्षणप्रतिपदोक्तपरिभाषया 'आन्महतो जातीये चे'त्यत्र 'सन्महत्' इति प्रतिपदोक्तसमासोत्तरपदग्रहणे सति तत एव षष्ठीसमासोत्तरपदनिराससंभवाद् व्यर्थमेव समानाधिकरणग्रहणमिति शङ्कते—**लाक्षणिकमित्यादिना**। परिहरति—**महाबाहुर्न स्यादिति**। महान्तौ बाहू यस्येति विग्रहः। अस्य समासस्य 'अनेकमन्यपदार्थे' इति सामान्यविहितत्वात् प्रतिपदोक्तत्वाभावात्तदुत्तरपदे परे आत्वं न स्यात्, अतः समानाधिकरणग्रहणमित्यर्थः। ननु कृतेऽपि समानाधिकरणग्रहणे लक्षणप्रतिपदोक्तपरिभाषा-

**'प्रागेकादशभ्यः' ( सू० १९९५ ) इति निर्देशाद्वा । एकादश । महतीशब्दस्य 'पुंवत्कर्मधारय—' ( सू७४६ ) इति पुंवद्भावे कृते आत्वम् । महाजातीया । 'महदात्वे घासकरविशिष्टेषूपसङ्ख्यानं पुंवद्भावश्च' ( वा ३९५० ) । असामानाधिकरण्यार्थमिदम् । महतो**

---

प्रवृत्तेर्दुर्वारत्वात् महाबाहुरित्यत्रात्त्वं न स्यादेवेत्यत आह—**तस्मादिति** । तच्छब्दार्थमाह—**समानाधिकरणग्रहणसामर्थ्यादिति** । एवं च लक्षणप्रतिपदोक्तपरिभाषां बाधित्वा लाक्षणिकस्यापि ग्रहणार्थं समानाधिकरणग्रहणमिति भावः । न च सुमहान्तौ बाहू यस्य स सुमहाबाहुरित्यत्र कथमात्त्वम् ? आत्त्वविधेः पदाङ्गाधिकारस्थत्वाभावेन तदन्तविध्यभावादिति वाच्यम्, उत्तरपदाक्षिप्तपूर्वपदस्य महता विशेषणे इति तदन्तविधिलाभात् । परममहत्परिमाणवानित्यत्र तु महतः परिमाणं महत्परिमाणं, परमं महत्परिमाणमिति षष्ठीसमासगर्भः कर्मधारय इति दिक् । ननु 'आन्महतः' इत्यत्र महत एव ग्रहणात् 'द्व्यष्टनः' इत्युत्तरसूत्रे द्व्यष्टनोरेव ग्रहणात् एकादशेत्यत्र कथमात्त्वमित्यत आह–**आदिति योगविभागादात्वमिति** । योगविभागस्य भाष्याद्दष्टत्वादाह—**प्रागेकादशभ्य इति निर्देशाद्वेति** । **एकादशेति**[1] । एकश्च दश चेति द्वन्द्वः । एकाधिका दशेति वा । 'आन्महत' इत्यत्र लिङ्गविशिष्टपरिभाषया महतीशब्दस्यापि जातीयर् प्रत्यये परे महाजातीयेति स्यादित्यत आह—**महतीशब्दस्येति** । न च परत्वात्पुंवत्त्वं बाधित्वा आत्वं स्यादिति वाच्यम्, आन्महतः इत्यत्र लिङ्गविशिष्टपरिभाषा न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये उक्तत्वादिति भावः[2] । **महदात्वे इति** । घास, कर, विशिष्ट-एषु परतः महत आत्त्वं पुंवत्त्वं च वक्तव्यमित्यर्थः । ननु 'आन्महतः' इत्यात्त्वे 'पुंवत्कर्मधारय' इति पुंवत्त्वे च सिद्धे किमर्थमिदमित्यत आह—**असामानाधिकरण्यार्थ-**

---

१. "चार्थे द्वन्द्वः" २-२-२९ सूत्रे भाष्ये—"एकादश द्वादशेति–कोऽयं समासः? एकादीनां दशादिभिर्द्वन्द्वसमासः । एकादीनां दशादिभिर्द्वन्द्व इति चेत् विंशत्यादिभिर्वचनं प्राप्नोति–एकविंशतिः द्वाविंशतिः" । एवं पूर्वपक्षिणा उक्ते सिद्धान्तिना उक्तम्—"सिद्धं तु अधिकान्ता संख्या, समानाधिकरणाऽधिकारे अधिकलोपश्चेति वक्तव्यम् । एकाधिका विंशतिः = एकविंशतिः । द्व्यधिका विंशतिः = द्वाविंशतिरिति । यदि समानाधिकरणः स्वरो न सिध्यति । यद्धि तत्संख्यापूर्वपदं प्रकृतिस्वरं भवतीति द्वन्द्व इत्येवं तत् । किं पुनः कारणं द्वन्द्व इत्येवं तत्? इह मा भूत्–शतसहस्रमिति । षष्ठीतत्पुरुषोऽयम् । अस्तु तर्हि द्वन्द्वः । ननु विंशत्यादिषु वचनं न सिध्यति । नैवं दोषः । "सर्वो द्वन्द्वः विभाषैकवद्भवति" इत्युक्तम् । अत्र एकादश–द्वादशविषये एव शङ्कासमाधानयोः करणात् एकादि नवान्तानां द्वन्द्वतत्पुरुषयोः अनभिधानमिति सूचितम् । सर्वो द्वन्द्वो विभाषैकवदित्यनेन समाहारद्वन्द्वाभिधानेन एक-वचनस्योपपत्तिकरणेन एकवचनमेवेष्यते इति कल्प्यते ।

२. "आन्महत इत्यत्र लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रे ( २-२-२९ ) भाष्ये उक्ततया परत्वात् पुंवत्त्वं बाधित्वाऽऽत्वं स्यादिति न शङ्क्यम् इति भावः" । ल० श० शे० ६-३-४६ ।

महदभूतचन्द्रमा इत्यादौ त्वसामर्थ्यात् महत आत्वमित्यपि भाष्ये स्पष्टम् ।

महत्या वा घासो महाघासः। महाकरः। महाविशिष्टः। 'अष्टनः कपाले हविषि' ( वा ३९५१ )। अष्टाकपालः। 'गवि च युक्ते' ( वा ३९५२ )। गोशब्दे परे युक्त इत्यर्थे गम्ये अष्टन आत्वं स्यादिति वक्तव्यमित्यर्थः। अष्टागवं शकटम्। 'अचप्रत्यन्ववपूर्वात्—' ( सू ९४३ ) इत्यत्र अच् इति योगविभागाद् बहुव्रीहावप्यच्। अष्टानां गवां समाहारोऽष्टगवम्, तद्युक्तत्वाच्छकटमष्टागवमिति वा। (८०८) द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ६।३।४९॥ आत्स्यात्। द्वौ च दश च द्वादश। द्व्यधिका दश इति वा। द्वाविंशतिः। अष्टादश। अष्टाविंशतिः। अबहुव्रीह्यशीत्योः किम्? द्वित्राः। द्व्यशीतिः। "प्राक्शता-

---

मिदमिति। महाकर इति। महतो महत्या वा कर इत्यर्थः। महाविशिष्ट इति। महतो महत्या वा विशिष्टः अधिक इत्यर्थः। अष्टन इति। कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः। अष्टाकपाल इति। अष्टसु कपालेषु संस्कृतः पुरोडाश इत्यर्थे तद्धितार्थे द्विगुः। 'संस्कृतं भक्षाः' इत्यण्। 'द्विगोर्लुगनपत्ये' इति लुक्। आत्वं सवर्णदीर्घः। गवि च युक्ते इति। वार्तिकमिदम्। तत्सूचयितुमाह—वक्तव्यमित्यर्थ इति। अष्टागवं शकटमिति। अष्टौ गावो यस्येति बहुव्रीहिः। आत्वं, सवर्णदीर्घः। अष्टभिर्गोभिर्युक्तमित्यर्थः। ननु 'गोरतद्धितलुकि' इति टज्विधेस्तत्पुरुषमात्रविषयत्वात् अष्टागवमिति कथमित्यत आह—अचप्रत्यन्ववेत्यत्रेति। तत्पुरुषत्वे अष्टगवशब्दष्टजन्त एवेत्याह—अष्टानामिति। तथा च समाहारद्विगोस्तत्पुरुषत्वात् 'गोरतद्धितलुकि' इति टच् सुलभ इत्यर्थः। नन्वष्टानां गवां समाहार इत्यर्थे शकटे कथमन्वयः, युक्तार्थवृत्तित्वाभावात्, कथं वा आत्वमित्यत आह—तद्युक्तत्वादिति। समाहारद्विगुरूपतत्पुरुषाट्टचि उपपन्नस्य अष्टगवशब्दस्य लक्षणया अष्टभिर्गोभिर्युक्ते वर्तमानस्य आत्वमित्यर्थः।

( ८०८ ) द्व्यष्टनः। शेषपूरणेन सूत्रं व्याचष्टे—आत्स्यादिति। द्विशब्दस्य अष्टन्शब्दस्य च सङ्ख्यावाचके उत्तरपदे परे आत्स्यात्, न तु बहुव्रीह्यशीत्योरित्यर्थः। द्विशब्दस्योदाहरति—द्वादशेति। द्वौ च एकश्च द्व्येकाः, द्व्यधिकः एकः द्व्येक इत्यादौ तु नास्ति 'एकादिनवान्तानां परस्परं द्वन्द्वतत्पुरुषौ न स्तः' इति 'चार्थे' इति सूत्रे भाष्ये ध्वनितत्वादिति शब्देन्दुशेखरे स्थितम्। द्वाविंशतिरिति। द्वौ च विंशतिश्चेति समाहारद्वन्द्वः। 'स नपुंसकम्' इति क्लीबत्वं तु न। किन्तु लोकात् स्त्रीत्वम्। इतरेतरयोगस्तु न, अनभिधानात्। द्व्यधिका विंशतिरिति तत्पुरुषो वा। अथाष्टन्शब्दस्योदाहरति—अष्टादशेति। अष्टौ च दश चेति द्वन्द्वः। अष्टाधिका दशेति वा। अष्टाविंतिरिति। अष्टौ च विंशतिश्चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। अष्टाधिका विंशतिरिति वा। द्वित्रा इति। द्वौ वा त्रयो वेति विग्रहः। 'संख्ययाव्यय' इति बहुव्रीहिः। 'बहुव्रीहौ संख्येये डच्' इति डच्। बहुव्रीहित्वादत्र द्विशब्दस्य आत्वं न। द्व्यशीतिरिति। द्वौ चाशीतिश्चेति समाहारद्वन्द्वः।

दिति वक्तव्यम्' (वा ३९५३)। नेह। द्विशतम्। द्विसहस्रम्। (८०९) **त्रेस्त्रयः। ६।३।४८॥** त्रिशब्दस्य त्रयस् स्यात्पूर्वविषये। त्रयोदश। त्रयोविंशतिः। बहुव्रीहौ तु, त्रिर्दश त्रिदशाः। सुजर्थे बहुव्रीहिः। अशीतौ तु त्र्यशीतिः। प्राक्शतादित्येव। त्रिशतम्। त्रिसहस्रम्। (८१०) **विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ६।३। ४९॥** द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे। द्विचत्वारिंशत्—द्वाचत्वारिंशत्। अष्टचत्वारिंशत्—अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्—त्रयश्चत्वारिंशत्। एवं पञ्चाशत्षष्टिसप्ततिनवतिषु। (८११) **एकादिश्चैकस्य चादुक् ६।३।७६॥** एकादिर्नञ्प्रकृत्या स्यादेकस्य चादुगागमश्च। नञो विंशत्या सह समासे कृते एकशब्देन सह

---

स्त्रीत्वं लोकात्। द्व्यधिका अशीतिरिति वा। अत्राशीतिपरकत्वात् द्विशब्दस्यात्त्वं न। **प्राक्शतादिति।** 'द्व्यष्टनः सङ्ख्यायाम्' इत्येतत् शतप्रभृतिसङ्ख्याशब्दे परे न भवतीति वक्तव्यमित्यर्थः। **द्विशतमिति।** द्वौ च शतं चेति समाहारद्वन्द्वः। द्व्यधिकं शतमिति वा। एवं द्विसहस्रमित्यत्रापि।

(८०९) **त्रेस्त्रयः।** सन्धिवेलादिषु त्रयोदशेति पाठात् सकारान्तोऽयमादेश इत्याह—**त्रयस् स्यादिति। पूर्वविषये इति।** प्राक्शतात् सङ्ख्याशब्दे उत्तरपदे परतः, न तु बहुव्रीह्यशीत्योरित्यर्थः। **त्रयोदशेति।** त्रयश्च दश चेति, त्र्यधिका दशेति वा विग्रहः। सुब्लुकि त्रिशब्दस्य त्रयस्, रुत्वम्, उत्त्वम्, आद्गुणः। एवं त्रयोविंशतिरित्यपि। **त्रिदशा इति।** त्रिरावृत्ता दशेत्यर्थः। 'बहुव्रीहौ संख्येये डच्' इति डच्। नन्वत्र त्रिरित्यस्य 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' इति सुजन्तत्वात् समासेऽपि सुचः श्रवणापत्तिरित्यत आह—**सुजर्थे बहुव्रीहिरिति।** सुजर्थे क्रियाभ्यावृत्तौ लक्षणया विद्यमानस्य त्रिशब्दस्यैवात्र 'सङ्ख्ययाव्यय' इति बहुव्रीहिः न तु सुजन्तस्येत्यर्थः। **त्र्यशीतिरिति।** त्रयश्चाशीतिश्चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। त्र्यधिकाशीतिरिति वा। **त्रिशतमिति।** त्रयश्च शतं चेति समाहारद्वन्द्वः, त्र्यधिकं शतमिति वा। एवं त्रिसहस्रमित्यपि।

(८१०) **विभाषा चत्वारिंशत्।** व्यवहितस्यापि द्व्यष्टनोरिस्यस्य सम्बन्धाय—**सर्वेषामिति।** द्व्यष्टनोस्त्रेश्चेत्यर्थः। तदाह—**द्व्यष्टनोस्त्रेश्चेति।**

(८११) **एकादिश्च।** 'न लोपो नञः' इति नञः इति षष्ठ्यन्तमनुवर्तते, तच्च प्रथमया विपरिणम्यते। 'नभ्राण्नपात्' इत्यतः प्रकृत्येत्यनुवर्तते। तदाह—**एकादिर्नञ् प्रकृत्येति।** एकः आदिर्यस्येति विग्रहः। **एकस्य चादुगागमश्चेति।** आदुगिति अदुगिति वा छेदः। **नञो विंशत्येति।** न विंशतिरिति विग्रहे नञ्समासे सति नविंशतिशब्दस्य एकशब्देन तृतीयान्तेन सह एकेन नविंशतिरिति विग्रहे समास इत्यन्वयः। ननु तत्कृतत्वाद्य-

**'तृतीया' इति योगविभागात्समासः । अनुनासिकविकल्पः । एकेन न विंशतिः> एकान्न-विंशतिः–एकाद्नविंशतिः । एकोनविंशतिरित्यर्थः । 'षष उत्त्वं दतृदशधासूत्तरपदादेष्टुत्वं च धासु[1] वेति वाच्यम्' ( वा ४००१–४००२ ) । षोडन् । षोडश । षड्धा–षोढा ।**

---

भावात् कथमिह तृतीयासमास इत्यत आह—**तृतीयेति योगविभागादिति** । **अनुनासिकविकल्प इति** । तृतीयासमासे कृते सुब्लुकि एक नविंशति इति स्थिते 'नलोपो नञः' इति प्राप्तस्य नकारलोपस्य प्रकृतिभावान्निवृत्तौ एकशब्दस्यादुगागमः । तत्र ककार इत्, उकार उच्चारणार्थः । कित्त्वादन्तावयवः, सवर्णदीर्घः, एकाद्-नविंशतिरिति स्थिते 'यरोऽनुनासिके' इति दकारस्य पक्षे अनुनासिकनकार इत्यर्थः । अदुगागमपक्षेऽपि पररूपं तु अकारोच्चारणसामर्थ्यान्न भवति । एकेन न विंशतिरिति विग्रहवाक्यम् । एकेन हेतुना विंशतिर्न भवतीत्यर्थः । **एकान्नविंशतिः, एकाद्नविंशतिरिति** । अनुनासिकत्वे तदभावे च रूपम् । **एकोनविंशतिरित्यर्थ इति** । पर्यवस्यतीति शेषः । एकेन ऊनेति विग्रहः । 'पूर्वसदृश' इति समासः । सा चासौ विंशतिश्च । **षष उत्वमिति** । दतृशब्दे दशन्–शब्दे च उत्तरपदे परे धाप्रत्यये च परे षष्-शब्दस्य उत्त्वं, उत्तरखण्डस्य दतृशब्दस्य दशन्शब्दस्य धाप्रत्ययस्य च आदेर्दकारस्य धकारस्य च ट्टुत्वं च वक्तव्यमित्यर्थः । ट्टुत्वमित्येव छेदः, न तु ष्टुत्वमिति प्रयोजनाभावात् । 'धासु वा' इति बहुवचनाद्विधार्थधाप्रत्ययस्यैव ग्रहणमिति भाष्यम् । धाप्रत्यये परे षष उत्त्वं वा स्यात् । ट्टुत्वं तु उत्त्वपक्षे तदभावपक्षे च पूर्ववाक्यान्नित्यमेवेति कैयटः । उत्त्वपक्ष एव नित्यं ट्टुत्वमिति हरदत्तः । **षोडन्निति** । षट् दन्ता यस्येति बहुव्रीहौ 'वयसि दन्तस्य दतृ' इति दत्रादेशः, ऋकारस्य इत्त्वम् । अन्त्यषकारस्य उत्त्वम् । आद्गुणः, दकारस्य ट्टुत्वेन डकारः, सुप्रत्यये उगित्त्वान्नुम्, सुलोपः, संयोगान्तलोपः । तस्यासिद्धत्वान्न दीर्घः । षोडन् इति रूपम् । **षोडशेति** । षट् च दश चेति, षडधिका दशेति वा विग्रहः । अन्त्यस्य षकारस्य उत्त्वम्, आद् गुणः, दकारस्य ट्टुत्वेन डकारः । हरदत्तमतमनुसृत्य उत्वाभावपक्षे धासु वेत्यस्योदाहरति—**षड्धेति** । 'संख्याया विधार्थे धा' । अन्त्यस्य षकारस्य उत्त्वाभावपक्षे तु ट्टुत्वमपि न भवति । 'झलां जशोऽन्ते' इति जश्त्वेन षकारस्य ड इति भावः । उत्त्वपक्षे उदाहरति—**षोढेति** । धाप्रत्ययः, अन्त्यस्य षकारस्य उत्त्वम्, आद् गुणः, ट्टुत्वेन धस्य ढ इति भावः । कैयटमते तु उत्त्वाभावपक्षेऽपि ट्टुत्वं नित्यमेव । कैयटमतमेव युक्तम्, षोढा–षड्ढा इत्येव भाष्ये उदाहृतत्वादिति शब्देन्दुशेखरे स्थितम् ।[2]

---

१. "धे चेत्येव वक्तव्ये धास्विति बहुवचनोपादानेन नानाधिकरणवाचिनः संख्याशब्दाद् बहुत्ववदर्थे वर्तमानाद् यो धा-प्रत्ययो विहितः तस्यैव ग्रहणम् । अत एव उत्तरपदाधिकारबाधः तदंशे कल्प्यते इत्येव प्राचीनैः व्याख्यातम्" ।—ल० श० शेखरटीकायां भैरवमिश्रः—पृ० ७६ ।



२. उत्तरपदादिः इत्यत्र उत्तरपदशब्दः प्रत्यासत्त्या प्रकृतिवाक्यघटकीभूतपरः । तेन

**( ८१२ ) परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २ । ४ । २६ ॥** एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । 'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः' ( वा १५४५ ) । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै >अलंकुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः । **( ८१३ ) पूर्ववदश्ववडवौ २ । ४ । २७ ॥**

---

( ८१२ ) **परवल्लिङ्गम्** । परवदिति षष्ठ्यन्ताद्वतिः । तदाह—**एतयोः परपदस्येवेति** । द्वन्द्वपदमत्र इतरेतरयोगद्वन्द्वपरम्, समाहारद्वन्द्वे 'स नपुंसकम्' इत्यस्य तदपवादत्वात् । **कुक्कुटमयूर्याविमे इति** । अत्र द्वन्द्वे अवयवलिङ्गेनानियमे प्राप्ते नियमार्थमिदम् । **अर्धपिप्पलीति** । 'अर्धं नपुंसकम्' इति तत्पुरुषः । अस्य एकदेशिसमासस्य पूर्वपदार्थप्रधानतया पूर्वपदलिङ्गे प्राप्ते उत्तरपदलिङ्गार्थं विधिः । अत्र 'द्वन्द्वतत्पुरुषयोः' इति षष्ठ्यन्तमर्थपरम् । द्वन्द्वतत्पुरुषार्थयोरित्यर्थः । एवञ्च कुक्कुटमयूर्याविमे इत्यनुप्रयोगेऽपि तदेव लिङ्गम् । **द्विगुप्राप्तेति** । द्विगु, प्राप्त, आपन्न, अलम्पूर्व, गतिसमास एतेषु परवल्लिङ्गस्य प्रतिषेधो वक्तव्य इत्यर्थः । **पञ्चस्विति** । उत्तरपदस्य नपुंसकत्वम् समासस्य नपुंसकत्वं प्राप्तं न भवति, किन्तु विशेष्यलिङ्गमेव । **प्राप्तजीविक इति** । अत्र उत्तरपदस्य जीविकाशब्दस्य यल्लिङ्गं तत्समासस्य न भवति । अलम्पूर्वस्योदाहरति—**अलंकुमार्यै अलङ्कुमारिरिति** । अत्र उत्तरपदकुमारीलिङ्गं समासस्य न भवति । नन्वत्र तदर्थादियोगाभावान्न चतुर्थीसमासः । 'पर्यादयो ग्लानाद्यर्थे' इत्यपि न भवति, तस्य समासस्य नित्यत्वेन अलं कुमार्यै इति भाष्ये विग्रहप्रदर्शनानुपपत्तेरित्यत आह—**अत एवेति** । 'एकविभक्ति च' इति कुमारी शब्दस्योपसर्जनत्वाद्ध्रस्वः । गतिसमासमुदाहरति—**निष्कौशाम्बिरिति** । अत्र कौशाम्बीशब्दलिङ्गं समासस्य न भवति । यद्यपि निरादिसमास एवायम्, न तु गतिसमासः, प्रादिग्रहणमगत्यर्थमित्युक्तेः । तथापि गतिसमासग्रहणं प्रादिसमासोपलक्षणमित्याशयः ।

( ८१३ ) **पूर्ववदश्ववडवौ** । अश्वश्च वडवा च इति द्वन्द्वे परवल्लिङ्गं बाधित्वा पूर्ववल्लिङ्गार्थमिदम् । अश्ववडवाविति द्वन्द्वः पूर्वपदस्य लिङ्गं लभते इत्यर्थे बहुवचने विभक्त्यन्तरे च न स्यादित्यत आह—**द्विवचनमतन्त्रमिति** । उपलक्षणमिदम् । द्विवचनं

---

धाप्रत्ययस्योत्तरपदत्वाभावेऽपि न क्षतिः । वाक्यभेदेन च ष्टुत्वविधानम् । विधेयभेदे वाक्यभेदस्य न्याय्यत्वात् । विभिन्नवाक्ये च वा-शब्दो न सम्बध्यते, तेन तस्य उत्वाभावेऽपि प्रवृत्तिः । अत एव भाष्ये "षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च वक्तव्यम्" "धासु चेति वक्तव्यम्" "उत्तरपदादेः ष्टुत्वं वक्तव्यम्" इति पृथक् वचनानि पठितानि" ।

द्विवचनमतन्त्रम् । अश्ववडवौ । अश्ववडवान् । अश्ववडवैः । ( ८१४ ) रात्राह्नाहाः पुंसि २ । ४ । २९ ॥ एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अनन्तरत्वात्परवल्लिङ्गतापवादोऽपि परत्वात्समाहारनपुंसकतां बाधते[1] । अहोरात्रः । रात्रेः पूर्वभागः पूर्वरात्रः । पूर्वाह्णः । द्व्यहः । 'सङ्ख्यापूर्वं रात्रं क्लीबम्'[2] ( लि १३१ ) । द्विरात्रम्, त्रिरात्रम्, गणरात्रम् ।

---

विभक्तिश्चेति द्वयमपि अविवक्षितमित्यर्थः । पूर्ववद्ग्रहणमत्र लिङ्गम्[3] । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः ।

( ८१४ ) रात्राह्नाहाः । द्वन्द्वतत्पुरुषयोरित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणतं रात्रादिभिर्विशेष्यन्ते, तदन्तविधिः । रात्राह्नाहान्तद्वन्द्वतत्पुरुषाः । पुंसीत्यर्थः । फलितमाह— एतदन्ताविति । परवल्लिङ्गतापवादः । ननु अहोरात्र इति समाहारद्वन्द्वे 'स नपुंसकम्' इति नपुंसकत्वप्रसङ्गः । न च नपुंसकत्वस्याप्ययं पुंस्त्वविधिरपवाद इति वाच्यम्, 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति न्यायेन अस्य पुंस्त्वविधेः परवल्लिङ्गतामात्रापवादत्वात् । तस्मादहोरात्राविति इतरेतरद्वन्द्व एवेहोदाहर्तुमुचित इत्यत आह—अनन्तरत्वादिति । अयमिति । पुंस्त्वविधिरिति शेषः । अहोरात्र इति । अहश्च रात्रिश्च तयोस्समाहार इति द्वन्द्वे परत्वान्नपुंसकत्वम्, अपवादत्वात् परवल्लिङ्गमपि बाधित्वा अनेन पुंस्त्वम् । 'अहस्सर्वैकदेश' इत्यच् । पूर्वाह्ण इति । अह्नः पूर्वमित्येकदेशिसमासः । 'राजाहस्सखिभ्यः' इति टच् । 'अह्नोऽह्नः' इत्यह्नादेशः । परवल्लिङ्गं नपुसकं च बाधित्वा पुस्त्वम् । द्व्यह्न इति । द्वयोरह्नोस्समाहार इति विग्रहे द्विगुः, टच्, 'न सङ्ख्यादेस्समाहारे' इत्यह्नादेशनिषेधः । परवल्लिङ्गं बाधित्वा पुंस्त्वम् । उत्तरपदस्याहन्शब्दस्य अकारान्तत्वाभावान्न स्त्रीत्वम्, समासान्तस्य समासभक्तत्वात् । सङ्ख्यापूर्वम् । लिङ्गानुशासनसूत्रमिदम् । न त्वष्टाध्यायीस्थं सूत्रम्, नापि वार्तिकम्, भाष्ये अदर्शनात् । 'रात्राह्नाहाः पुंसि' इत्यस्यायमपवादः । त्रिरात्रमिति । समाहारद्विगुः । 'अहस्सर्वैकदेश' इत्यच् । गणरात्रमिति । गणशब्दो बहुपर्यायः, 'बहुगणवतु' इति संख्यात्वम् । गणानां रात्रीणां समाहार इति द्विगुः, अच् ।

---

१. "संख्यापूर्वा रात्रिः" इति लिङ्गानुशासने विशिष्टपुंस्त्वविधानात् वृत्त्याद्युक्तं पुंस्त्वं चिन्त्यम्" ।—व्या० सु० सि० पृ० १११८ ।

२. "इदं तत्पुरुषाधिकारे लिङ्गानुशासने पाठात् प्रतिप्रसवलाघवानुरोधाच्च समाहारद्विगावेव प्रवर्तते" इति भावः ।—ल० श० शे० ।

३. "अत एव पूर्ववदिति चरितार्थम् । अन्यथा निपातनादेव सिद्धे किं तेन ? समुदायस्य पूर्ववल्लिङ्गत्वेऽपि उत्तरपदेऽश्ववडवपूर्वापराधरोत्तराणाम् इति निर्देशाट्टापो निवृत्तिः । अश्ववडवाविति समुदायस्य आवन्तत्वाभावात् स्त्रीत्वाप्राप्त्या बहुवा सिद्धम् । अविशेषेण आनुपूर्व्येण चरितार्थः स्यात्, अश्ववडवशब्दार्थः पूर्ववल्लिङ्गं भजते इत्यर्थात् । ल० श० शे० ( प्रकृतसूत्रस्थः ) ।

**( ८१५ ) अपथं नपुंसकम् २ । ४ । ३० ॥** तत्पुरुषः इत्येव । अन्यत्र तु अपथो देशः । कृतसमासान्तनिर्देशान्नेह । अपन्थाः । **( ८१६ ) अर्धर्चाः पुंसि च २ । ४ । ३१ ॥** अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः–अर्धर्चम् । ध्वजः–ध्वजम् । एवं तीर्थ-शरीरमण्डपीयूषदेहाङ्कुशकलशेत्यादि[1] । **( ८१७ ) जात्याख्यायामेकस्मिन्बहुवचन-**

---

**( ८१५ ) अपथं नपुंसकम् ।** न पन्थाः इति विग्रहे नञ्समासो नञो नस्य लोपे 'ऋक्पूः' इत्यप्रत्यये टिलोपे अपथशब्दः स नपुंसकमित्यर्थः । परवल्लिङ्गतापवादः । तत्पुरुष इत्येवेति । 'परवल्लिङ्गम्' इत्यतस्तदनुवृत्तेरिति भावः । द्वन्द्वग्रहणं तु नानुवर्तते, अयोग्यत्वात् । **अन्यत्र त्विति ।** बहुव्रीहावित्यर्थः । **अपन्था इति ।** 'पथो विभाषा' इति समासान्तविकल्पः । 'पथः सङ्ख्याव्ययादेः' इति वक्ष्यमाणवार्तिकेन गतार्थमेवेदं सूत्रम् ।

**( ८१६ ) अर्धर्चाः ।** बहुवचनात्तदादीनां ग्रहणमित्याह—**अर्धर्चादय इति । अर्धर्चमिति ।** ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासः । 'ऋक्पूः' इति अच् । परवल्लिङ्गं स्त्रीत्वं बाधित्वा पुन्नपुंसकत्वविकल्पः ।

---

१. व्याकरण-सिद्धान्तसुधानिधौ कारिकाभिः गणपाठो दर्शितः । —( पृ० १११८-१११९ ) । तथा हि—

अर्धर्च-कूर्च-कवचावर्चस्क-पङ्क-वलीकाः ।
निष्कानीक-पिनीका-ढक-मोदक-कटक-टङ्क-पिण्याकाः ॥ १ ॥
मन्चक-पञ्चक-दण्डक-तण्डक-षष्ठिक-चषक-सरक-शोकाः ।
शाकाशोकौ शुल्कं मस्तक-वरका विटङ्क-पिटक-शूकाः ॥ २ ॥
फलक-नपुंसक-मूलक-पातक-नख-पुङ्ख-शङ्खाश्च ।
शृङ्ग-विडङ्ग-तडागोद्योग-निदाघा ध्वज-व्रजाम्भोजाः ॥ ३ ॥
कुञ्जो वाजः कुक्कुट-किरीट-कुट-कूट-कर्वट-कपाटाः ।
नट-निकट-शकट-कङ्कट-पट-पेट-मठ-कण्ठ-काण्ड-दण्डानि ॥ ४ ॥
नीडा-ण्ड-मण्ड-खण्डा खाढ-तृणं-स्थाणु-वेणु-रेणु-तृणाः ।
तोरण–सुवर्ण–भूषण–कार्षापण–वारण–चरण–रणाः ॥ ५ ॥
वाण–व्रणा–पराह्ण–द्रोणा वृत–हस्त–पलित–घृत–मृताः ।
कुस्त–क्ष्वेडित–वृत्त–प्रयुत–वसन्ता–मृता–युता वास्तु ॥ ६ ॥
पुन्नपुंसकयोः शेषोऽर्ध–पिण्याक–कण्टकाः ।
मोदकस्तण्डकष्टङ्कः शाटकः खर्वटोऽर्बुदः ॥ ७ ॥
घातकोद्योगचरक–तमाला–मलका नडः ।
कुष्टं मुण्डं सीधु पुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ॥ ८ ॥
संगमं शतमानार्ध-शम्बला-न्वय-ताण्डवम् ।
[illegible] ॥ ९ ॥

**मन्यतरस्याम् १।२।५८॥** एकोऽप्यर्थो वा बहुवद्भवति। ब्राह्मणाः पूज्याः—ब्राह्मणः पूज्यः। (८१८) **अस्मदो द्वयोश्च १।२।५९॥** एकत्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात्। वयं ब्रूमः। पक्षे—अहं ब्रवीमि, आवां ब्रूव इति वा। 'सविशेषणस्य प्रतिषेधः' (वा ७२१)। पटुरहं ब्रवीमि। (८१९) **फल्गुनीप्रोष्ठपदानां च**

---

(८१७) **जात्याख्यायाम्**[1]। आकृत्यधिकरणन्यायेन घटादिशब्दानां जातिवाचकत्वाज्जातेश्चैकत्वादेकवचनमेव स्यादित्यारम्भः। जातिशब्दे एकत्वे बहुवचनं वा स्यादित्यक्षरार्थः। तथा सति ब्राह्मणाः भोज्याः इत्यादौ विशेषणान्न स्यादित्याशङ्क्य एकस्मिन्नर्थे विद्यमानः शब्दः बहूनर्थान् वक्ति, एकार्थो बहुवद्भवतीति लभ्यते इत्यभिप्रेत्याह—**एकोऽप्यर्थ इति**। बहुत्वप्रयुक्तं कार्यं लभत इत्यर्थः[2]।

(८१८) **अस्मदो द्वयोश्च। सविशेषणस्येति**। 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः' इत्यत्र तु अवयवगतबहुत्वाभिप्रायं बहुवचनम्[3]।

---

पूयं पत्रीव-पात्रीवे यूषं चमस-चिक्कसौ।
अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम्॥ १०॥
तन्त्रोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत्।

**पिण्याकं** तिलखलि। **तण्डकं** परिस्वारः—छन्दोगानां ग्रन्थविशेषः। **दण्डकं** छेदः। **खर्वटः** चतुःशतग्रामाणां संग्रहस्थानम्। **अर्बुदः** अक्षिरोग-संख्याभेदौ। **पातकः** गोहत्यादिः। **चरकं** वैद्यविशेषः। **नडोऽन्तः सुषिरं** तृणम्। **पुस्तं** मांसशष्कुली।

"द्वे कृष्णले रूप्यमाषौ धरणं षोडशैव ते।
शतमानं तु दशभिः धरणैः पलमेव च"॥ इति स्मृतिः।

**अर्भः** अक्षिरुक्। **शंवलः** पथि व्ययः। **कवियम्** अश्वमुखबन्धनम्। **पारम् अवारं** च नदीतीरे। **पूयं** क्लिन्नासृक्। **प्रग्रीवम्**—वातायनम्। **पात्रीवं** यज्ञोपकरणम्। **विष्कलं** यवपृष्ठम्।

१. "जातेः प्राधान्येन आख्यायाम् इत्यर्थः। भावप्रत्ययं विना प्राधान्येन जातिबोधे यवादिशब्दानां साधुत्वे इदमेव सूत्रं मानम्। तत्र जातेः एकत्वेन एकवचनमेव प्राप्नोतीत्ययमारम्भः। एकत्वञ्चात्र बहुवचनार्थः। तदुक्तं भाष्ये—"यावद् ब्रूयाद् एकोऽर्थो बहुवद् भवतीति तावद् एकस्मिन् बहुवचनम्" इति।—ल० श० शे० (प्रकृतसूत्रस्थः)।

२. "अशिष्यं वा बहुवत् पृथक्त्वाभिधानात्" इति भाष्यवचनेन ज्ञायते यद् जातिप्राधान्यविवक्षायामेकवचनस्य, द्रव्यप्राधान्यविवक्षायां तु बहुवचनस्य सिद्धत्वात् सूत्रं नारम्भणीयम्।

३. "अयमपि योगः शक्यः अवक्तुम्। कथम्? अहं ब्रवीमि, आवां ब्रवः, वयं ब्रूमः। इमानीन्द्रियाणि कदाचित् स्वातन्त्र्येण विवक्षितानि भवन्ति। तद्यथा—इदं मे अक्षि सुष्ठु पश्यति। कदाचित् पारतन्त्र्येण विवक्षितानि भवन्ति--अनेन अक्ष्णा सुष्ठु पश्यामि। तद्यदा स्वातन्त्र्येण विवक्षा तदा बहुवचनं भविष्यति। यदा पारतन्त्र्येण तदा एकवचन-द्विवचने भविष्यतः"।

—म० भा० १-२-५९।

नक्षत्रे १।२।६० ॥ द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात् । पूर्वे फल्गुन्यौ—पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे—पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् ? फल्गुन्यौ माणविके । (८२०) तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् १ । २ । ६३ ॥ बहुत्वं द्वित्ववद्भवति । तिष्यश्च पुनर्वसू च—तिष्यपुनर्वसू । तिष्येति किम् ? विशाखानुराधाः । नक्षत्रेति किम् ? तिष्यपुनर्वसवो माणवकाः । ( ८२१ ) स नपुंसकम् २ । ५ । १७ ॥ समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' ( वा १५५६ ) । पञ्चमूली । 'आबन्तो वा' ( वा १५५७ ) । पञ्चखट्वम्—पञ्चखट्वी । 'अनो नलोपश्च, वा द्विगुः स्त्रियाम्' ( वा १५५८ ) । पञ्चतक्षी—पञ्चतक्षम् । 'पात्राद्यन्तस्य न' ( वा १५५९ ) । पञ्चपात्रम् । त्रिभुवनम् । चतु-

---

( ८१९ ) फल्गुनी । नक्षत्रे इति प्रथमाद्विवचनम् । नक्षत्रे यद्यभिधीयते इत्यर्थः । चेन द्वयोरित्यनुकर्षः । तदाह—द्वित्वे इति[1] । पूर्वे प्रोष्ठपदे इति । स्त्रीत्वादौङश्शीभावः । 'प्रोष्ठपदा भाद्रपदा स्त्रियाम्' इत्यमरः । फल्गुन्यौ माणविके इति । फल्गुनीनक्षत्रयुक्तकाले जाते इत्यर्थः । 'नक्षत्रेण युक्तः' इत्यण् । 'लुबविशेषे' इति लुप् । ततो जातार्थे 'फल्गुन्याषाढाभ्यां टानौ' इति टः । टित्त्वात् ङीप् ।

( ८२० ) तिष्यपुनर्वस्वोः । विशाखानुराधा इति । विशाखे च अनुराधा चेति विग्रहः । तिष्यपुनर्वसव इति । तिष्यश्च पुनर्वसू चेति विग्रहे तिष्यशब्दात् पुनर्वसुशब्दाच्च 'नक्षत्रेण युक्तः' इत्यण् । 'लुबविशेषे' इति लुप् । ततो जातार्थे सन्धिवेलाद्यण् । 'श्रविष्ठाफल्गुनी' इत्यादिना लुक् । जात्याख्यायामित्यादिचतुस्सूत्र्या अत्र सङ्गतिश्चिन्त्या ।

( ८२१ ) स नपुंसकम् । 'द्विगुरेकवचनम्' इति द्विगुः । 'द्वन्द्वश्च प्राणि' इति द्वन्द्वश्च तच्छब्देन परामृश्यते । तौ च समाहारार्थावेव विवक्षितौ, व्याख्यानात् । तदाह—समाहारे इति । पञ्चगवमिति । पञ्चानां गवां समाहार इति द्विगुः । दन्तोष्ठमिति । दन्ताश्च ओष्ठौ चेति विग्रहः । 'द्वन्द्वश्च प्राणि' इति समाहारद्वन्द्वः । अकारान्तेति । अकारान्तम् उत्तरपदं यस्येति विग्रहः । 'स नपुंसकम्' इत्यस्यापवादः । पञ्चमूलीति । समाहारद्विगुः, स्त्रीत्वं, 'द्विगोः' इति ङीप् । आबन्तो वेति । स्त्रियां वेति वक्तव्यमित्यर्थः । पञ्चखट्वमिति । समाहारद्विगुः । नपुंसकत्वे ह्रस्वः । पञ्चखट्वीति । 'उपसर्जनह्रस्वत्वे अदन्तत्वात्' 'द्विगोः' इति ङीप् । अनो नलोपश्चेति । अन इत्यावर्तते । एकं प्रथमया विपरिणतं द्विगुरित्यत्रान्वेति । तदन्तविधिः । अन्नन्तो द्विगुः स्त्रियां वा स्यात्, अनो नस्य लोपः

---

१. "अयमपि योगः शक्योऽवक्तुम् ।—फल्गुनीसमीपगते चन्द्रमसि फल्गुनीशब्दो वर्तते । बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम् । यदा तयोरेवाभिधानं तदा द्विवचनं भविष्यति" ।—म० भा० १-२-६० ।

युगम् । 'पुण्यसुदिनाभ्यामहः क्लीबतेष्टा' (वा० १५५३)। पुण्याहम् । सुदिनाहम् । 'पथः सङ्ख्याव्ययादेः' ( वा १५७४ )। सङ्ख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पन्थास्त्रिपथम् । विरूपः पन्थाः विपथम् । कृतसमासान्तनिर्देशान्नेह । सुपन्थाः, अतिपन्थाः । 'सामान्ये नपुंसकम्' ( वा० ५०४३ )[1] । मृदु पचति । प्रातः

---

स्यादित्यर्थः । वाग्रहणं स्त्रियामित्यत्रैव सम्बध्यते, न तु नलोपेऽपि । तेन स्त्रीत्वाभावेऽपि नलोपः । पञ्चतक्षीति । पञ्चानां तक्ष्णां समाहार इति द्विगुः, स्त्रीत्वं, नलोपः, 'द्विगोः' इति ङीबिति भावः । पञ्चतक्षमिति । समाहारद्विगुः । स्त्रीत्वाभावपक्षे 'स नपुंसकम्' इति नपुंसकत्वं, नलोप इति भावः । न चान्तर्वर्तिनीं विभक्तिमाश्रित्य तक्षन्शब्दस्य सुबन्तत्वेन पदत्वात् 'नलोपः प्रातिपदिक' इत्यनेन नलोपो भविष्यतीति वाच्यम्, 'उत्तरपदत्वे च' इति प्रत्ययलक्षणनिषेधात् । पात्राद्यन्तस्य नेति । पात्रादिर्गणः । तदन्तस्य समाहारद्विगोः न स्त्रीत्वमिति वक्तव्यमित्यर्थः । पञ्चपात्रम्, त्रिभुवनम्, चतुर्युगमिति । स्त्रीत्वाभावे 'स नपुंसकम्' इति नपुंसकत्वमिति भावः । पुण्येति । पुण्यसुदिनाभ्यां परः यः अहन्शब्दः तदन्तस्य तत्पुरुषस्य नपुंसकत्वं वक्तव्यमित्यर्थः । 'रात्राह्नाहा' इत्यस्यापवादः । पुण्याहमिति । पुण्यम् अहरिति कर्मधारयः, 'राजाहः' इति टच्, टिलोपः । 'उत्तमैकाभ्यां च' इति अह्नादेशनिषेधः । सुदिनाहमिति । सुदिनम् अहरिति कर्मधारयः, टच्, टिलोपः, प्रशस्तपर्यायः सुदिनशब्द इति न पौनरुक्त्यम् । पथः सङ्ख्याव्ययादेरिति । नपुंसकत्वं वक्तव्यमिति शेषः । सङ्ख्याव्ययेति समाहारद्वन्द्वः । संख्याव्ययमादिरिति कर्मधारयः, दिग्योगे पञ्चमी, पर इति शेषः, पथ इति कृतसमान्तादकारान्तात् प्रथमा । तदाह—सङ्ख्याव्ययादेरिति । परवल्लिङ्गतापवादः । त्रिपथमिति । 'ऋक्पूः' इति अप्रत्ययः, टिलोपः। एवं विपथमित्यपि । 'प्रादयो गताद्यर्थे' इति समासः सुपन्थाः, अतिपन्थाः इति । 'स्वती पूजायाम्' इति समासः । 'न पूजनात्' इति समासान्तनिषेधः । आवश्यकत्वादनेन सिद्धे 'अपथं नपुंसकम्' इति न कार्यम् । सामान्ये नपुंसकमिति । न्यायसिद्धमेतत्, विशेष्यविशेषसन्निधाने सति, स्त्रीत्वपुंस्त्वयोरत्राभिव्यक्तौ 'उभयोरन्तरं यच्च तदभावे नपुंसकम्' इति लक्षणलक्षितनपुंसकत्वस्यैव न्याय्यत्वात् । अत एव 'दाण्डिनायन' इति सूत्रभाष्ये एकश्रुतिः स्वरसर्वनाम, नपुंसकं लिङ्गसर्वनामेत्युक्तम् । मृदु पचतीति । क्रियाविशेषणमिदं द्वितीयान्तम् । पचेर्हि विक्लित्त्यनुकूलव्यापारोऽर्थः । तत्र विक्लित्त्यंशे मृदुत्वमन्वेति। विक्लित्तिश्च व्यापारे साध्यत्वेनान्वेति । तथा च मृदुपाकं करोतीत्यर्थः। तथा च धातूपात्तव्यापारं प्रति कर्मीभूतेन विक्लित्त्यंशेन सामानधिकरण्यात् मृद्विति द्वितीया । यत्र तु धात्वर्थः करणत्वेनान्वेति 'यजेत स्वर्गकाम' इत्यादौ, तत्र हि यागेन स्वर्गं कुर्यादित्यर्थः । तत्र

---



१. 'अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यते' ।—महाभाष्यम्—१-२-६९ ।

कमनीयम् । ( ८२२ ) तत्पुरुषोऽनञ्कर्मधारयः २।४।१९॥ अधिकारोऽयम् । ( ८२३ ) संज्ञायां कन्थोशीनरेषु २।४।२०॥ कन्थान्तस्तत्पुरुषः क्लीबं स्यात्, सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयः । तेषां कन्था सौशमिकन्थम् । संज्ञायाम् किम् ? वीरणकन्था । उशीनरेषु किम् ? दाक्षिकन्था । ( ८२४ ) उपज्ञोपक्रमं तदाद्याचिख्यासायाम् २।४।२१॥ उपज्ञान्तः उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् तयोरुपज्ञायमानोपक्रम्यमानयोरादिः प्राथम्यं चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः । ( ८२५ ) छाया बाहुल्ये २।४।२२॥ छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये । इक्षूणां छाया इक्षुच्छायम् । "विभाषा सेना"—( सू ८३८ ) इति विकल्पस्यायमपवादः । 'इक्षुच्छायानिषादिन्यः' इति तु 'आ समन्तान्निषादिन्यः' इत्याङ्श्लेषो बोध्यः । ( ८२६ ) सभाराजाऽमनुष्य-

---

क्रियाविशेषणस्य तृतीयान्तत्वमेव 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यादावित्यन्यत्र विस्तरः । प्रातः कमनीयमिति । रमणीयमित्यर्थः । अत्रापि प्रातरित्यव्ययस्य विशेष्यस्यालिङ्गत्वात् तद्विशेषणस्य कमनीयशब्दस्यानव्ययस्य लिङ्गविशेषावगमकत्वाभावात् नपुंसकत्वमेवेति भावः । इदं चानियतलिङ्गविषयम् । तेन आदि पचति प्रातरादिरित्यत्र न भवति, आदिशब्दस्य नियतलिङ्गत्वात् ।

( ८२२ ) तत्पुरुषोऽनञ् । नञ्समासकर्मधारयाभ्यां भिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभागित्यर्थः । तदाह—अधिकारोऽयमिति । 'परवल्लिङ्गम्' इत्यतः प्रागिति शेषः ।

( ८२३ ) संज्ञायां कन्थो । सुगममेव ।

( ८२४ ) उपज्ञा । उपज्ञायते प्रथमं ज्ञायत इत्युपज्ञा । 'स्त्रियां क्तिन्' इत्यधिकारे 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपक्रम्यते आरभ्यते इत्युपक्रमः । कर्मणि घञ् । 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधः । उपज्ञा चोपक्रमश्चेति समाहारद्वन्द्वः । तत्पुरुषः इत्यस्य विशेषणमिदम्, तदन्तविधिः, 'स नपुंसकम्' इत्यतो नपुंसकमित्यनुवर्तते । तदाह—उपज्ञान्तः उपक्रमान्तश्चेति । तच्छब्देन उपज्ञोपक्रमौ विवक्षितौ । आदिशब्दो भावप्रधानः प्राथम्ये वर्तते । तयोरादिः प्राथम्यं तदादिः । तस्य आचिख्यासा आख्यातुमिच्छा, विवक्षायामिति यावत् । तदाह—तयोरादिरित्यादि । पाणिनेरुपज्ञेति । कर्तरि षष्ठी । पाणिन्युपज्ञं ग्रन्थ इति । पाणिनिना प्रथमं ज्ञायमान इत्यर्थः । इदं प्रकरणं परवल्लिङ्गत्वस्य विशेष्यनिघ्नत्वस्य चापवादः । नन्दोपक्रमं द्रोण इति । नन्देनारभ्यमाण इत्यर्थः । कर्तरि षष्ठ्याः समासः ।

( ८२५ ) छाया बाहुल्ये । छायया तत्पुरुषस्य विशेषणात् तदन्तविधिमभिप्रेत्याह—छायान्त इति । पूर्वपदार्थेति । कस्य बाहुल्ये इत्याकाङ्क्षायाम् आपादकद्रव्यनिमित्त-

पूर्वा २ । ४ । २३ ॥ राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् । ईश्वरसभम् । 'पर्यायस्यैवेष्यते' ( वा ५१९ ) । नेह—राजसभा, चन्द्रगुप्तसभा । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षस्सभम्, पिशाचसभम् । ( ८२७ ) अशाला च २ । ४ । २४ ॥ सङ्घातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात् । स्त्रीसभम् । स्त्रीसङ्घात इत्यर्थः । अशाला किम् ? धर्मसभा । धर्मशालेत्यर्थः । ( ८२८ ) विभाषा सेनासुराच्छायाशालानिशानाम् २ । ४ । २५ ॥ एतदन्तस्तत्पुरुषः क्लीबं वा स्यात् । ब्राह्मणसेनम्—ब्राह्मणसेना । यवसुरम्—यवसुरा । कुड्यच्छायम्—कुड्यच्छाया । गोशालम्—गोशाला । श्वनिशम्—श्वनिशा । 'तत्पुरुषोऽनञ्कर्मधारयः' ( सू ८२२ ) इत्यनुवृत्तेर्नेह । दृढसेनो राजा । असेना । परमसेना ।

इति तत्पुरुषसमासप्रकरणम् ।

---

कत्वात् छायायाः तद्बाहुल्ये इति गम्यते । तच्चापादकद्रव्यमर्थात् पूर्वपदार्थभूतमिति भावः । बाहुल्ये किम् ? कुड्यस्य छाया कुड्यच्छाया ।

( ८२६ ) सभा । राजा च अमनुष्यश्च राजामनुष्यौ, तौ पूर्वौ यस्याः सा राजामनुष्यपूर्वा इति विग्रहः । छायया तत्पुरुषविशेषणात्तदन्तविधिः । राजपर्याय एव विवक्षितः, न तु राजन्शब्दः । तदाह—**राजपर्यायपूर्व इति । इनसभम्, ईश्वरसभमिति ।** इनस्य ईश्वरस्य वा सभेति विग्रहः । इनेश्वरशब्दौ राजपर्यायाविति पर्यायमात्रग्रहणे प्रमाणं दर्शयति—**पर्यायस्यैवेष्यत इति ।** भाष्यकृतेति शेषः । 'स्वं रूपम्' इति सूत्रे 'जित्पर्यायवचनस्यैव राजाद्यर्थम्' इति वार्तिकं भाष्ये पठितमिति भावः । **राजसभेति ।** राजन्शब्दपूर्वकत्वेऽप्यत्र राजपर्यायपूर्वकत्वं नास्तीति भावः । **चन्द्रगुप्तसभेति ।** चन्द्रगुप्त इति राजविशेषस्य नाम, न तु तत्पर्याय इति भावः । नन्वमनुष्यपूर्वत्वात् देवसभेत्यादावपि स्यादित्यत आह—**अमनुष्यशब्दो रूढ्येति ।** असुरशब्दो दैत्यानिवेति भावः ।

( ८२७ ) **अशाला च ।** अशालार्थः सभाशब्दः शालायां सङ्घातार्थे च वर्तते । तत्र राजामनुष्यपूर्वकस्य शालावाचिनः सभाशब्दस्य पूर्वसूत्रे क्लीबत्वमुक्तम् । सम्प्रति संघातवाचिनः सभाशब्दस्य क्लीबत्वमुच्यत इत्याह—**सङ्घायां या सभेति ।** सभाशब्द इत्यर्थः ।

( ८२८ ) **विभाषा सेना ।** प्रथमार्थे षष्ठी । तत्पुरुष इत्यनुवृत्तं सेनादिभिर्विशेष्यते । तदन्तविधिः । तदाह—**एतदन्त इति ।** प्रत्येकाभिप्रायमेकवचनम् । **श्वनिशमिति ।** शुनो निशेति विग्रहः । कृष्णचतुर्दशीत्याहुः । 'शुनश्चतुर्दश्यामुपवसतः पश्यामः' इति तिर्यगधिकरणे

# अथ बहुव्रीहिसमासप्रकरणम्

( ८२९ ) शेषो बहुव्रीहिः २ । २ । २३ ॥ अधिकारोऽयम् । 'द्वितीया श्रित'— ( सू ६८३ ) इत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्तमित्यर्थः । ( ८३० ) अनेकमन्यपदार्थे २ । २ । २४ ॥ अनेकं प्रथमान्तमन्यपदार्थे वर्तमानं वा समस्यते स बहुव्रीहिः । अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च

---

शाबरभाष्ये स्थितम् । दृढसेन इति । दृढा सेना यस्येति बहुव्रीहिः । तत्पुरुषत्वाभावात् न क्लीबत्वविकल्पः । असेनेति । तत्पुरुषत्वेऽपि नञ्समासत्वान्न क्लीबत्वविकल्पः । परमसेनेति । कर्मधारयत्वात् न क्लीबत्वम् । 'तत्पुरुषोऽनञ्कर्मधारयः' इत्यधिकारस्य अत्रैव प्रयोजनमिति कैयटे[1] प्रपञ्चितम् ।

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां तत्पुरुषसमासप्रकरणम् ।

---

( ८२९ ) शेषो बहुव्रीहिः । त्रिकस्येति । विभक्तेरित्यर्थः । ननु 'द्वितीया श्रित' इति, 'तृतीया तत्कृत' इति 'चतुर्थी तदर्थ' इति 'पञ्चमी भयेन' इति, 'षष्ठी' इति, 'सप्तमी शौण्डैः' इति च द्वितीयादिविभक्तीनां षण्णां समासो विहितः । विशेषणं विशेष्येणेत्यादिना तु प्रथमाया अपि समासो विहितः, अतः शेषविभक्तिदुर्लभेत्यत आह—विशिष्येति । विशेषणसमासस्य वस्तुतः प्रथमाविभक्तौ प्रवृत्तावपि प्रथमाविभक्ति विशिष्य उच्चार्य विधानाभावात् समासविधिषु विशिष्यनिर्दिष्टद्वितीयादिविभक्तिषट्कापेक्षया शेषः प्रथमाविभक्तिरिति भावः । तदाह—प्रथमान्तमित्यर्थ इति । एतच्च भाष्ये स्पष्टम् ।

( ८३० ) अनेकमन्यपदार्थे । प्रथमान्तमिति । शेषग्रहणानुवृत्तिलभ्यमिदम् । एवं च सुप्सुपेति नानुवर्तते, प्रयोजनाभावात् । अनेकं सुबन्तमिति पाठेऽपि प्रथमान्तमित्यर्थः । अन्येति । उपस्थितप्रथमान्तातिरिक्तेत्यर्थः । एवञ्च पञ्चभिर्भुक्तमन्नं यस्य सः पञ्चभुक्तः इति बहुव्रीहिनिवृत्त्यर्थं 'बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्' इति वार्तिकं यद्भाष्ये स्थितं, यच्च वृष्टे देवे यो गतः सः वृष्टदेव इति बहुव्रीहिनिवृत्त्यर्थम् 'अप्रथमाविभक्त्यर्थे

---

१. "विभाषा सेना०" २-४-२५ इति सूत्रे एव अधिकारस्य प्रयोजनं भाष्ये दर्शितम्, न तु "संज्ञायां कन्थोशीनरेषु" २-४-२० इत्यादि पञ्चसूत्र्याम् (सू० ८१३ तः ८२७ पर्यन्तम्), अतत्पुरुषस्य नञ्-समासस्य कर्मधारयस्य च तत्राऽसम्भवात् । अन्यत्र तु स्पष्टार्थमेव तत्-सम्बन्धः । विस्तरस्तु भाष्ये द्रष्टव्यः । —म० भा० २-४-२५

फलितम्। प्राप्तमुदकं यं सः प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न। वृष्टे देवे गतः। व्यधिकरणानामपि न। पञ्चभिर्भुक्तमस्य। 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' ( वा १३६० )। प्रपतितपर्णः प्रपर्णः। 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' ( वा १३६१ )। अविद्यमानपुत्रः अपुत्रः। 'अव्ययानां च'। उच्चैर्मुखः। 'सप्तम्युपमान-

---

बहुव्रीहिर्वक्तव्यः' इति वार्तिकं, तदुभयमपि न कर्तव्यमित्याह—अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितमिति। शेषग्रहणादिति शेषः। शेषग्रहणात् प्रथमान्त इति लभ्यत इति हि भाष्यम्। पञ्चभिर्भुक्तमस्य इत्यत्र च समस्यमानपदयोरेकस्याप्रथमान्तत्वान्न बहुव्रीहिरिति फलितम्। प्रथमान्तातिरिक्तस्य पदस्यार्थे वर्तमानं समस्यते इत्यर्थाश्रयणाद् वृष्टे देवे गतः इत्यत्रापि न बहुव्रीहिरिति फलितमिति भावः। तत्र द्वितीयार्थबहुव्रीहिमुदाहरति—प्राप्तमिति। 'गत्यर्थाकर्मक' इति कर्तरि क्तः। अत्र विग्रहवाक्ये ग्रामकर्मकप्राप्तिकर्तृ उदकमित्येवं ग्रामस्य विशेषणतया, विशेष्यत्वेन तु प्राप्तस्य उदकस्य बोधः। समासे तु एकार्थीभावमहिम्ना उदककर्तृकप्राप्तिकर्मीभूतः ग्राम इत्येवं ग्रामस्य विशेष्यतया, तद्विशेषणतया तु प्राप्तस्य उदकस्य बोधः। एवमुत्तरत्रापि विशेषणविशेष्यभावव्यत्यासो ज्ञेयः। अथ तृतीयार्थबहुव्रीहिमुदाहरति—ऊढरथोऽनड्वानिति। ऊढो रथो येनेति विग्रहः। अथ चतुर्थ्यर्थबहुव्रीहिमुदाहरति—उपहृतपशू रुद्र इति। उपहृतः पशुः यस्मै इति विग्रहः। अथ पञ्चम्यर्थबहुव्रीहिमुदाहरति—उद्धृतौदना स्थालीति। उद्धृतः ओदनः यस्या इति बहुव्रीहिः। अथ षष्ठ्यर्थबहुव्रीहिमुदाहरति—पीताम्बरो हरिरिति। पीतमम्बरं यस्येति विग्रहः। अथ सप्तम्यर्थबहुव्रीहिमुदाहरति—वीरपुरुषको ग्राम इति। वीराः पुरुषा यस्मिन्निति विग्रहः। 'शेषाद्विभाषा' इति कप्। अत्र कर्मादीनां समासेनाभिहितत्वात् प्रथमैव। प्रथमार्थे तु नेति। अन्यपदार्थशब्देन प्रथमान्तातिरिक्तद्वितीयाद्यन्तार्थस्यैव विवक्षितत्वादिति भावः। व्यधिकरणानामपि नेति। अनेकं प्रथमान्तमित्युक्तेरिति भावः। प्रादिभ्यः। प्रादिभ्यः परं यद्धातुजप्रकृतिकप्रथमान्तं तस्य अन्येन प्रथमान्तेन बहुव्रीहिर्वाच्यः। तत्र बहुव्रीहौ प्रादिभ्यः परस्य उत्तरपदस्य धातुजस्य लोपश्च विकल्पेन वाच्य इत्यर्थः। अत्र बहुव्रीहिरित्यनुवादः, लोपस्यैव विधिः। प्रपतितपर्ण इति। प्रकृष्टं पतितं प्रपतितम्। 'प्रादयो गताद्यर्थे' इति समासः। प्रपतितं पर्णं यस्मादिति विग्रहः। प्रपर्ण इति। प्रपतितेति पूर्वपदे धातुजस्य उत्तरपदस्य लोपे रूपम्। नञोऽस्त्यर्थानाम्। नञः परेषामस्त्यर्थवाचिनां सुबन्तानां बहुव्रीहिर्वाच्यः। तत्रास्त्यर्थवाचिनामुत्तरपदभूतानां लोपश्च वा वक्तव्य इत्यर्थः। अविद्यमानपुत्र इति। न विद्यमान इति नञ्समासः। नलो नलोपः। अविद्यमानः पुत्रो यस्येति विग्रहः। अपुत्र इति। अस्त्यर्थकविद्यमानशब्दस्य

पूर्वपदस्योत्तरपदलोपश्च'। सप्तम्यन्तम् उपमानं च पूर्वपदं यस्य तस्य पदान्तरेण समासः उत्तरपदलोपश्च भवतीत्यर्थः। कण्ठेस्थः कालः यस्य सः कण्ठेकालः। उष्ट्रमुखमिव मुखं यस्य सः उष्ट्रमुखः। 'सङ्घातविकारषष्ठ्याश्चोत्तरपदलोपश्च'। केशानां सङ्घातश्चूडा यस्य सः केशचूडः। सुवर्णस्य विकारः अलङ्कारो यस्य सः सुवर्णालङ्कारः। 'अस्तिक्षीरादयश्च'। अस्तीति विभक्तिप्रतिरूपकमव्ययम्। अस्तिक्षीरा गौः। (८३१) स्त्रियाः पुंवद्भाषित-

---

लोपे रूपम्। अत्रापि बहुव्रीहिरित्यनुवादः। अव्ययानां चेति। बहुव्रीहिर्वाच्य इति शेषः। उच्चैर्मुख इति। उच्चैरित्यस्याधिकरणशक्तिप्रधानतया सप्तम्यन्तत्वेन प्रथमान्तत्वाभावादप्राप्ते बहुव्रीहौ वचनम्। सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्चेति। सप्तम्यन्तोपमानसहिते पूर्वपदे यस्य तत् सप्तम्युपमानपूर्वपदम्, तस्य समस्तपदस्य पदान्तरेण बहुव्रीहिर्वाच्यः। समस्तपदात्मके पूर्वपदे यदुत्तरपदे तस्य लोपश्च वक्तव्य इत्यर्थः। तत्र सप्तम्यन्तसहितसमस्तपूर्वपदकं बहुव्रीहिमुदाहरति—कण्ठेस्थः कालो यस्य सः कण्ठेकाल इति। 'सुपि स्थः' इति कः। कण्ठे तिष्ठतीति कण्ठेस्थः। उपपदसमासः। 'अमूर्धमस्तकात्' इति सप्तम्या अलुक्। कण्ठेस्थ इति समस्तपदम्। तस्य कालशब्देन बहुव्रीहिरित्यनुवादः। सुपो लुक्। तत्र कण्ठेस्थेत्येतद्बहुव्रीहेः पूर्वपदं सप्तम्यन्तपदसहितं तस्मिन् यदुत्तरपदं स्थेत्येतत् तस्य लोपो वाचनिकः। कण्ठेकाल इति सप्तम्यन्तपदघटितसमासगर्भो बहुव्रीहिः। तदवयवभूतसप्तम्याः 'अमूर्धमस्तकात्' इत्यलुक्। अथ उपमानसहितसमस्तपूर्वपदकं बहुव्रीहिमुदाहरति—उष्ट्रमुखमिव मुखं यस्य सः उष्ट्रमुख इति। उष्ट्रस्य मुखमिवेति विग्रहे षष्ठीतत्पुरुषः। मुखशब्दो मुखसदृशे लाक्षणिक इति सूचयितुमिवशब्दः। उष्ट्रमुखमिव मुखं यस्येति विग्रहे बहुव्रीहिरित्यनुवादः। तत्र उष्ट्रमुखेत्येतद्बहुव्रीहेः पूर्वपदं, तस्मिन् उत्तरपदस्य मुखशब्दस्य लोपो वाचनिकः। सङ्घातविकारषष्ठ्याश्चोत्तरपदलोपश्चेति। षष्ठ्यन्तात्परस्य उत्तरपदस्य पदान्तरेण बहुव्रीहिर्वाच्यः। षष्ठ्यन्तादुत्तरपदस्य लोपश्च। केशानां सङ्घातश्चूडा यस्य सः केशचूड इति। सङ्घातशब्दस्य लोपे रूपम्। सुवर्णस्य विकारोऽलङ्कारः यस्य सः सुवर्णालङ्कार इति। अत्र विकारशब्दस्य उत्तरपदस्य लोपे रूपम्। अस्तिक्षीरादयश्चेति। अस्तिक्षीरादयो बहुव्रीहावुपसङ्ख्येया इत्यर्थः। अस्तिक्षीरा गौरित्यत्र अस्तीत्यस्य तिङन्ततया प्रथमाविभक्त्यन्तत्वाभावादप्राप्ते बहुव्रीहाविदं वचनम्। वस्तुतस्तु वचनमिदं नारब्धव्यमित्याह—अस्तीति विभक्तिप्रतिरूपकमव्ययमिति। विभक्तिप्रतिरूपकत्वेन निपातितत्वादस्तीति 'स्वरादिनिपातमव्यय'मित्यव्ययं विद्यमानार्थकम्। ततः सोः 'अव्ययादाप्सुपः' इति लुकि प्रत्ययलक्षणेन प्रथमान्तत्वादेव सिद्धेरिदं वचनं न कर्तव्यमिति भावः। तदुक्तं भाष्ये—'अस्तिक्षीरादिवचनं न वाऽव्ययत्वात्' इति।

(८३१) स्त्रियाः पुंवत्। भाषितपुंस्कादनूङ् [illegible] समानाधिकरणे स्त्रियाम् इति

**पुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४ ॥** भाषित-पुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या अलुक्, षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः । 'गोस्त्रियोः–' ( सू ६५६ ) इति ह्रस्वः । चित्रा गावो यस्येति लौकिकविग्रहे 'चित्रा अस्

---

षष्ठ्यन्तस्य विशेषणमित्यभिप्रेत्य व्याचष्टे—**भाषितपुंस्कादिति** । अनूङित्यस्य व्याख्यानम्—**ऊङोऽभाव इति** । अर्थाभावेऽव्ययीभावः नञ्तत्पुरुषो वा । भाषितपुंस्कादिति दिग्योगे पञ्चमी । पर इति प्रथमान्तमध्याहार्यम् । तथा च भाषितपुंस्कात् परः अनूङ् यस्येति विग्रहे बहुव्रीहिरिति फलति । ननु समासे सति पञ्चम्या लुक्प्रसङ्ग इत्यत आह—**निपातनात् पञ्चम्या अलुगिति** । इदमुपलक्षणम् । निपातनात् अप्रथमान्तस्यापि बहुव्रीहिः परशब्दलोपश्चेत्यपि बोध्यम् । यद्वा, अत एव निपातनादप्रयुज्यमानेऽपि परशब्दे तदर्थे गम्ये पञ्चमी । नन्वेवमपि स्त्रिया इति षष्ठ्यन्तस्य 'भाषितपुंस्कादनूङ्' इति यदि विशेषणं स्यात्, तर्हि भाषितपुंस्कादनूङ् इति षष्ठी श्रूयेतेत्यत आह—**षष्ठ्याश्च लुगिति** । निपातनादित्यनुषज्यते । भाषितः पुमान् येन तद्भाषितपुंस्कम् तदस्यास्तीति अर्शआद्यच् । पुंस्त्वे स्त्रीत्वे च एकप्रवृत्तिनिमित्तकमिति यावत् । 'तृतीयादिषु भाषित-पुंस्कम्' इत्यत्र व्याख्यातमेतत् । तदाह—**तुल्ये प्रवृत्तिनिमित्ते इति** । **स्त्रीवाचकस्य शब्दस्येति** । स्त्रीलिङ्गस्येत्यर्थः । स्त्रिया इति षष्ठ्यन्तं न स्त्रीप्रत्ययपरमिति भावः । पुंवदिति रूपातिदेशः पुंस इव पुंवदिति षष्ठ्यन्ताद्वतिः तदाह—**पुंवाचकस्येव रूपमिति** । स्त्रियामिति सप्तम्यन्तमपि न स्त्रीप्रत्ययपरं किन्तु स्त्रीलिङ्गपरम् । तच्च 'अलुगुत्तरपदे' इत्यधिकृते उत्तरपदेऽन्वेति । तदाह—**स्त्रीलिङ्गे उत्तरपदे इति** । अपूरणीप्रियादि-ष्वित्येतद्व्याचष्टे—**न तु पूरण्यां प्रियादौ तु परत इति** । पूरणीति स्त्रीलिङ्गनिर्देशात् स्त्रीलिङ्गः पूरणप्रत्ययान्तो विवक्षित इति ज्ञेयम् । तुल्ये प्रवृत्तिनिमित्ते इति किम् ? कुटीभार्यः । अत्र पुंवत्त्वं न भवति, कुटीशब्दो घटे पुंल्लिङ्गः, गेहे तु स्त्रीलिङ्ग इति प्रवृत्तिनिमित्तभेदात् । स्त्रीप्रत्ययः पुंवत्स्यादित्युक्ते तु स्त्रीप्रत्ययस्य लोपः पर्यवस्येत् । ततश्च पट्वी भार्या यस्य सः पट्वभार्यः इत्यत्र उत्तरपदं परनिमित्तमाश्रित्य ङीपो लोपे तस्य 'अचः परस्मिन्' इति स्थानिवत्त्वादुकारस्य यण् स्यात् । **ह्रस्व इति** । चित्रा गावो यस्येति विग्रहे बहुव्रीहिसमासे सुब्लुकि सति अनेकमिति प्रथमान्तनिर्दिष्टतया, विग्रहे नियतविभक्तिकतया वा उपसर्जनत्वे सति चित्रगोशब्दे ओकारस्य 'गोस्त्रियोः' इत्युकारो ह्रस्व इत्यर्थः । ननु चित्रा गाव इति लौकिकसमासाभ्युपगमे सुपो लुकः प्राक् चित्रा अस् इत्यत्र पूर्वसवर्णदीर्घे गो अस् इत्यत्र पूर्वरूपे च एकादेशे कृते तस्य

यजमानः। चान्द्रायणिकः। ( १७३७ ) संशयमापन्नः ५।१।७३॥ संशयविषयीभूतोऽर्थः सांशयिकः। ( १७३८ ) योजनं गच्छति ५।१।७४॥ यौजनिकः। 'क्रोशशतयोजनशतयोरुपसङ्ख्यानम्' ( वा ३०५५ )। क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः। 'ततोऽभिगमनमर्हतीति च वक्तव्यम्' ( वा ३०५६ )। क्रोशशतादभिगमनमर्हतीति— क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः। ( १७३९ ) पथः ष्कन् ५।१।७५॥ षो ङीषर्थः। पन्थानं गच्छति–पथिकः। पथिकी। ( १७४० ) पन्थो ण नित्यम् ५।१।७६॥ पन्थानं नित्यं गच्छति—पान्थः–पान्था। ( १७४१ ) उत्तरपथेनाहृतं च ५।१।७७॥ उत्तरपथेनाहृतमौत्तरपथिकम्। उत्तरपथेन गच्छति–औत्तर-

---

( १७३६ ) पारायण। द्वितीयान्तेभ्यः पारायणादिशब्देभ्यः वर्तयतीत्यर्थे ठञ् स्यादित्यर्थः। पारायणं वर्तयतीति। पारायणं वेदाध्ययनं तद्वर्तयति आवर्तयतीत्यर्थः। पारायणिकः छात्र इति। गुरौ त्वध्येतरि नायं प्रत्ययः, अनभिधानादिति भावः[1]। तौरायणिको यजमान इति। ऋत्विजि नायं प्रत्ययः, अनभिधानादिति भावः। चान्द्रायणिक इति। चान्द्रायणं वर्तयतीत्यर्थः। चान्द्रायणं कृच्छ्रविशेषः।

( १७३७ ) संशयमापन्नः। अस्मिन्नर्थे संशयशब्दात् द्वितीयान्ताट्ठक् स्यादित्यर्थः। अत्र आपन्न इति कर्तरि क्तः। विषयतया प्राप्त इत्यर्थः। उपसर्गवशात्। संशयविषयीभूतोऽर्थ इति। तेन समवायेन संशयाधारे सन्देग्धरि नायं प्रत्यय इति भावः। अमरस्तु 'सांशयिकः संशयापन्नमानसः' इत्याह।

( १७३८ ) योजनं गच्छति। द्वितीयान्ताद्योजनशब्दात् गच्छतीत्यर्थे ठञ् स्यादित्यर्थः। क्रोशशतेति। आभ्यामपि द्वितीयान्ताभ्यां गच्छतीत्यर्थे ठञ् उपसङ्ख्यानमित्यर्थः। क्रोशशतादिति। ल्यब्लोपे पञ्चमी। कोशशतमतीत्येत्यर्थः।

( १७३९ ) पथः ष्कन्। पथः ष्कन् इति छेदः। द्वितीयान्तात् पथिन्शब्दात् गच्छतीत्यर्थे ष्कन् स्यादित्यर्थः।

( १७४० ) पन्थो ण नित्यम्। पथ इत्यनुवर्तते गच्छतीति च। नित्यमिति गच्छतीत्यर्थान्वितं प्रत्ययार्थं प्रविष्टमेव न तु विधानान्वितं सत् महाविभाषानिवृत्त्यर्थम्। द्वितीयान्तात् पथिन्शब्दात् नित्यं गच्छतीत्यर्थे णप्रत्ययः स्यात् प्रकृतेः पन्थादेशश्चेत्यर्थः। भाष्ये तु नित्यग्रहणं प्रत्याख्यातम्।

( १७४१ ) उत्तरपथेनाहृतं च। उत्तरपथशब्दात् तृतीयान्तात् आहृतमित्यर्थे

---

१. "यः पारायणमधीते स पारायणिक इत्युच्यते, यस्तु तुरायणेन यजते स तौरायणिकः इत्युच्यते। यश्चाधीते यश्च परस्य करोति। उभौ तौ वर्तयतः। यश्च यजते यश्च पुरोडाशान्निर्वर्तयति उभौ तौ वर्तयतः। [illegible] भवति ? अनभिधानात्। —महाभाष्यम्।

पथिकः । 'आहृतप्रकरणे वारिजङ्गलस्थलकालान्तरपूर्वादुपसङ्ख्यानम्' ( वा २०५७ )। वारिपथिकम् । ( १७४२ ) कालात् ५।१।७८॥ 'व्युष्टादिभ्योऽण्' (सू १७६१) इत्यतः प्रागधिकारोऽयम् । ( १७४३ ) तेन निर्वृत्तम् ५ । १ । ७९ ॥ अह्ना निर्वृत्तम् 'आह्निकम्'। ( १७४४ ) तमधीष्टो भृतो भूतो भावी ५ । १ । ८० ॥ अधीष्टः सत्कृत्य व्यापारितः। भृतो वेतनेन क्रीतः। भूत. स्वसत्तया व्याप्तकालः । भावी तादृशः एवानागतकालः । मासमधीष्टो मासिकोऽध्यापकः । मासं भृतः मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिक उत्सवः । ( १७४५ ) मासाद्वयसि यत्खञौ ५ । १ । ८१ ॥ मासं भूतो मास्यः-मासीनः । ( १७४६ ) द्विगोर्यप् ५ । १ । ८२ ॥ मासाद्वयसीत्यनुवर्तते । द्वौ मासौ भूतो द्विमास्यः । ( १७४७ ) षण्मासाण्ण्यच्च ५ । १ । ८३ ॥ वयसि इत्येव । यबप्यनुवर्तते चाट्ठञ् । षण्मास्यः-षाण्मास्यः-षाण्मासिक. । ( १७४८ ) अवयसि ठंश्च ५ । १ । ८४ ॥ चाण्ण्यत् । षण्मासिको व्याधिः-षाण्मास्यः । ( १७४९ ) समायाः खः

---

गच्छतीत्यर्थे च ठञ् स्यादित्यर्थः । वारिजङ्गलेति । वारि, जङ्गल, स्थल, कान्वार एतत्पूर्वात् पथिन्शब्दात् तृतीयान्ताद् आहृतमिति गच्छतीति चार्थे ठञित्यर्थः । वारिपथेन गच्छति आहृतं वेत्यर्थः । जाङ्गलपथिकः, स्थालपथिकः, कान्तारपथिकः ।

( १७४२ ) कालात् । इत्यतः प्रागिति । व्याख्यानादिति भावः ।

( १७४३ ) तेन निर्वृत्तम् । तृतीयान्तान्निर्वृत्तमित्यर्थे ठञ् स्यादित्यर्थः । आह्निकमिति । 'अह्नष्टखोरेव' इति नियमान्न टिलोपः ।

( १७४४ ) तमधीष्टो । द्वितीयान्तात् अधीष्टादिष्वर्थेषु ठञ् स्यादित्यर्थः । व्यापारित इति । प्रेरित इत्यर्थः । तादृश एवेति । स्वसत्तया व्याप्यमानकाल इत्यर्थः । मासमधीष्ट इत्यादौ 'कालाध्वनोः' इति द्वितीया ।

( १७४५ ) मासाद्वयसि । अत्र 'भूत इत्येवानुवर्तते' व्याख्यानात् । मासशब्दात् द्वितीयान्तात् भूत इत्यर्थे यत्खञौ स्तः वयसि गम्ये इत्यर्थः ।

( १७४६ ) द्विगोर्यप् । अनुवर्तत इति । मासान्ताद् द्विगोर्भूत इत्यर्थे यप् स्याद्वयसि गम्ये इत्यर्थः ।

( १७४७ ) षण्मासाण्ण्यच्च । वयसीत्येवेति । षण्मासशब्दात् भूत इत्यर्थे ण्यच्च स्याद्वयसि गम्ये इत्यर्थः । अत्र चकारात्सन्निहितस्य यपोऽनुकर्षणे ण्यद्यपावेव स्याताम्, न तु ठञपि । इष्यते तु ठञपि । तत्राह—यबप्यनुवर्तते इति । स्वरितत्वादिति भावः । तर्हि चकारः किमर्थ इत्यत आह—चाट्ठञिति । तथा च ण्यत् यप् ठञिति त्रयः प्रत्ययाः फलिताः ।

( १७४८ ) अवयसि ठंश्च । षण्मासशब्दात् द्वितीयान्तात् भूते अवयसि ठन् च स्यादित्यर्थः ।

५।१।८५॥ समामधीष्टो भृतो भूतो भावी वा–समीनः। (१७५०) द्विगोर्वा ५।१।८६॥ समायाः खः इत्येव। 'तेन परिजय्य–' (१७५७) इत्यतः प्राङ्निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः। द्विसमीनः–द्वैसमिकः। (१७५१) रात्र्यहःसंवत्सराच्च ५।१।८७॥ द्विगोः इत्येव। द्विरात्रीणः–द्वैरात्रिकः। द्व्यहीनः–द्वैयह्निकः। समासान्तविधेरनित्यत्वान्न टच्। द्विसंवत्सरीणः। (१७५२) सङ्ख्यायाः संवत्सरसङ्ख्यस्य च ७।३।१५॥ सङ्ख्याया उत्तरपदस्य वृद्धिः स्यात् ञिणादौ। द्विसांवत्सरिकः। द्वे षष्टीभूतो द्विषाष्टिकः। परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम्। तेन

---

(१७४९) समायाः खः। मण्डूकप्लुत्या 'तमधीष्टो भृतो भूतो भावी' इति कृत्स्नमेव सूत्रमनुवर्तते। समाशब्दाद् द्वितीयान्तात् अधीष्टादिष्वर्थेषु खः स्यादित्यर्थः।

(१७५०) द्विगोर्वा। समायाः ख इत्येवेति। तथा च समान्तात् द्विगोर्द्वितीयान्तात् खो वा स्यात्। पक्षे ठञिति फलितम्। 'अप्सुमनःसमासिकतावर्षाणां बहुत्वं च' इति लिङ्गानुशासनसूत्रम्। 'हायनोऽस्त्री शरत्समाः' इत्यमरः। 'समां समां विजायते' इति सूत्रादेकवचनमप्यस्ति। पञ्चस्विति। तेन निर्वृत्तम् तमधीष्टो भृतो भूतो भावीति पञ्चस्वित्यर्थः। एषां यथायोगमन्वयः। द्वैसमिक इति। खाभावे प्राग्वतीयष्ठञ्।

(१७५१) रात्र्यहः। द्विगोरित्येवेति। रात्रि, अहन्, संवत्सर एतदन्तात् द्विगोर्निर्वृत्तादिष्वर्थेषु खो वा स्यादित्यर्थः। पक्षे ठञ्। द्विरात्रीण इति। द्वाभ्यां रात्रिभ्यां निर्वृत्तः, द्वे रात्री अधीष्टो भृतो भूतो भावी वेत्यर्थः। एवमग्रेऽपि यथायोगं ज्ञेयम्। द्व्यहीन इति। द्वाभ्याम् अहोभ्यां निर्वृत्तः, द्वे अहनी अधीष्ट इत्यादिष्वर्थेषु 'तद्धितार्थ' इति द्विगोः खः, 'अह्नष्टखोः' इति टिलोपः। समाहारद्विगोस्तु न खः, टचि कृते अहन्शब्दाभावात्। द्वैयह्निक इति। 'अह्नष्टखोरेव' इति नियमात् न टिलोपः। किन्त्वल्लोपः, अह्नादेशो वा। 'न य्वाभ्याम्' इत्यैच्। ननु द्व्यहीन इत्यत्र 'तद्धितार्थ' इति द्विगुसमासे कृते 'रात्र्यहःसंवत्सराच्च' इति खं बाधित्वा परत्वात् 'राजाहःसखिभ्यः' इति टचि 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशे तस्य स्थानिवत्त्वेनाहन्-शब्दत्वेऽपि टजन्तस्य तदभावात् 'रात्र्यहःसंवत्सराच्च' इति खप्रत्ययो न स्यात्। कृतेऽपि खप्रत्यये द्व्यह्नीन इति स्यादित्यत आह—समासान्तविधेरनित्यत्वान्न टजिति। एवं च टजभावे सति नाह्नादेशः, समासान्ते पर एव तद्विधानादिति भावः। 'समासान्तविधिरनित्यः' इति षष्ठाध्यायस्य द्वितीये पादे 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' इति सूत्रभाष्ये स्पष्टम्। अथ संवत्सरान्तस्य खे उदाहरति—द्विसंवत्सरीण इति। ठञि त्वादिवृद्धौ प्राप्तायाम्—

(१७५२) सङ्ख्यायाः संवत्सर। आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम्। संवत्सर सङ्ख्या ... [illegible] ... सङ्ख्यायाः

द्वैसमिक इत्युत्तरपदवृद्धिर्न। ( १७५३ ) वर्षाल्लुक्च ५। १। ८८॥ वर्षशब्दान्ताद् द्विगोर्वा खः। पक्षे ठञ् वा च लुक्। त्रीणि रूपाणि। द्विवर्षीणो व्याधिः। द्विवर्षः। ( १७५४ ) वर्षस्याभविष्यति ७। ३। १६॥ उत्तरपदस्य वृद्धिः स्यात्। द्विवार्षिकः। भविष्यति तु द्वैवर्षिकः। अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न। गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः। 'परिमाणान्तस्यासंज्ञाशाणयोः' ( सू १६८३ )। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। द्विनैष्किकम्। 'असंज्ञा–' इति किम्? पञ्च कपालाः परिमाणमस्य पाञ्चकपालिकम्। तद्धितान्तः संज्ञा। द्वैशाणम्। कुलिजशब्दमपि केचित्पठन्ति। द्वैकुलिजिकः। ( १७५५ ) चित्तवति नित्यम् ५। १। ८९॥ वर्षशब्दान्ताद् द्विगोः प्रत्ययस्य नित्यं लुक् स्याच्चेतने प्रत्ययार्थे। द्विवर्षो दारकः। ( १७५६ )

---

परस्य संवत्सरसङ्ख्यस्योत्तरपदस्येत्यर्थः। नन्वत्र संवत्सरग्रहणं व्यर्थम्। संवत्सरस्य द्वादशमासपरिमाणतया 'परिमाणान्तस्यासञ्ज्ञशाणयोः' इत्येव सिद्धेरित्यत आह—परिमाणान्तस्येत्येवेति।

( १७५३ ) वर्षाल्लुक् च। वा च लुगिति। खठञोरिति शेषः। द्विवर्षीण इति। खे रूपम्। द्विवर्ष इति। खठञोर्लुकि रूपम्।

ठञि आदिवृद्धौ प्राप्तायाम्—( १७५४ ) वर्षस्याभविष्यति। आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम्। शेषपूरणेन तद्व्याचष्टे—उत्तरपदस्य वृद्धिः स्यादिति। अभविष्यति यो ञिदादिः तस्मिन्परे इत्यर्थः। निर्वृत्तादिषु पञ्चस्वर्थेषु भविष्यदर्थं वर्जयित्वा तदितरेषु चतुर्ष्वर्थेषु यस्तद्धितः तस्मिन् परे इति यावत्। द्विवार्षिक इति। द्वाभ्यां वर्षाभ्यां निर्वृत्तः, द्वे वर्षे अधीष्टः भृतः भूतो वेत्यर्थः। अत्यन्तसंयोगे द्वितीया। द्वैवर्षिक इति। व्याधिरिति शेषः। चित्तवति नित्यलुको वक्ष्यमाणत्वात्। नन्वेवं सति द्वे वर्षे अधीष्टो भृतो भूतो वा कर्म करिष्यति द्विवार्षिक इत्यत्र कथमुत्तरपदवृद्धिः। भविष्यत्त्वस्य प्रतीतेरित्याशङ्क्याह—अधीष्टभृतयोरभविष्यतीति प्रतिषेधो नेति। कुत इत्यत आह—गम्यते हि तत्र भविष्यत्तेति। अध्येषणभरणयोः क्तप्रत्ययेन भूतत्वमेव शब्दशक्त्या गम्यते। तद्धितप्रत्ययेन च तथाविधाध्येषणभरणकर्मीभूतौ प्रतीयेते। एवंविधाध्येषणभरणविशिष्टयोस्तु भविष्यता कर्माचरणेन सम्बन्धः कर्म करिष्यतीत्यनेनावगत इति न स तद्धितार्थः। एवञ्च तत्रापि भविष्यदर्थकतद्धितपरकत्वाभावात् स्यादेवोत्तरपदवृद्धिरित्यर्थः। द्विवार्षिको मनुष्य इति। 'चित्तवति नित्यम्' इति वक्ष्यमाणस्तु नित्यलुक् न भवति, चित्तवतीत्येत्रारम्भसामर्थ्यात् नित्यत्वे सिद्धे पुनर्नित्यग्रहणेन भूत एवार्थे नित्यं लुगित्यभ्युपगमादिति हरदत्तः। केचित्तु द्विवार्षिकः अमनुष्य इति छिन्दन्ति।



( १७५५ ) चित्तवति नित्यम्। प्रत्ययस्येति। खस्य ठञश्चेत्यर्थः। दारकः। बालकः।

षष्टिकाः षष्टिरात्रेण पच्यन्ते ५ । १ । ९० ।। बहुवचनमतन्त्रम् । षष्टिको धान्यविशेषः । तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते । (१७५७) तेन परिजय्यलभ्यकार्यसुकरम् । ५ । १ । ९३ ।। मासेन परिजय्यो–जेतुं शक्यो–मासिको व्याधिः । मासेन लभ्यं कार्यं सुकरं वा मासिकम् । ( १७५८ ) तदस्य ब्रह्मचर्यम् ५ । १ । ९४ ।। द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात् । अत्यन्तसंयोगे द्वितीया । मासं ब्रह्मचर्यमस्य स मासिको ब्रह्मचारी । आर्धमासिकः । यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति मासिकं ब्रह्मचर्यम् । 'महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसङ्ख्यानम्' ( वा ३०६४ ) । महानाम्न्यो नाम 'विदा-मघवन्–' इत्याद्या ऋचः, तासां ब्रह्मचर्यमस्य माहानाम्निकः । हरदत्तस्तु 'भस्याढे–' इति पुंवद्भावान्माहानामिक इत्याह । 'चतुर्मासाण्ण्यो यज्ञे तत्र भव इत्यर्थे' (वा ३०६९) । चतुर्षु

---

( १७५६ ) षष्टिकाः[1] । तृतीयान्तादिति । षष्टिरात्रशब्दादिति शेषः ।

( १७५७ ) तेन परिजय्य । निर्वृत्तादयः पञ्चार्था निवृत्ताः । तेन परिजय्यम्, तेन लभ्यम्, तेन कार्यम्, तेन सुकरम् इत्यर्थेषु तृतीयान्ताट्ठञित्यर्थः । परिजय्य इत्यस्य विवरणम् जेतुं शक्य इति ।

( १७५८ ) तदस्य ब्रह्मचर्यम् । ननु द्वितीयान्तादिति कथम् ? सूत्रे ब्रह्मचर्यविशेषणस्य तच्छब्दस्य प्रथमान्तत्वादित्यत आह—अत्यन्तेति । तथा च कालविशेषाभिव्याप्तं ब्रह्मचर्यस्येत्यर्थे कालात्प्रत्ययः । इदमर्थं प्रति ब्रह्मचर्यं विशेषणम् । मासिको ब्रह्मचारीति । मासाभिव्याप्तब्रह्मचर्यवानित्यर्थः । आर्धमासिक इति । 'अर्धात्परिमाणस्य' इत्युभयपदवृद्धिः । अत्र इदंशब्दार्थस्य ब्रह्मचारिणः प्राधान्यम् । मासाभिव्याप्तं ब्रह्मचर्यं तु तद्विशेषणमिति स्थितिः । यद्वेति । सूत्रे तदिति प्रथमान्तम् । ब्रह्मचर्यमिति षष्ठ्यर्थे प्रथमा । तथा च प्रथमान्तात्कालवाचिनः अस्य ब्रह्मचर्यस्येत्यर्थे ठञित्यर्थः फलति । तदाह—प्रथमान्तादिति । कालवाचिन इति शेषः । अस्येत्यर्थ इति । अस्य ब्रह्मचर्यस्येत्यर्थः । मासोऽस्येत्यनन्तरं ब्रह्मचर्यस्येति शेषः । अस्मिन्पक्षे ब्रह्मचर्यमेव प्रत्ययार्थत्वात्प्रधानम् । इदमर्थस्तु तद्विशेषणमिति बोध्यम् । उपसङ्ख्यानमिति । अस्य ब्रह्मचर्यमित्यर्थे ठञ् इति शेषः । माहानाम्निक इति । महानाम्नीशब्दस्य ऋग्विशेषेषु रूढस्य नित्यस्त्रीलिङ्गत्वात् भाषितपुंस्कत्वाभावात् 'भस्याढे' इति पुंवत्त्वं नेति भावः । हरदत्तस्त्विति । माहानाम्निकमित्येव भाष्ये उदाहृतत्वादिदमुपेक्ष्यमिति भावः । चतुर्मासाण्ण्यो यज्ञे, तत्र इति । वार्तिक-

---

१. "षष्टिके संज्ञाग्रहणं कर्तव्यम्" इति वार्तिके भाष्ये एकवचनं प्रयुक्तम् । 'प्रयोग बाहुल्यात् सूत्रे बहुवचनप्रयोगः' इति हरदत्त आह । कैयटेन 'एकवचनान्तस्यापि षष्टिकशब्दस्य लोके प्रयोगाद् बहुवचनमतन्त्रमिति' व्याख्यातम् । धान्य-विशेषे एव षष्टिकशब्दः संज्ञात्वेन रूढः । तेनाभिधानाद् [illegible]

मासेषु भवन्ति–चातुर्मास्यानि यज्ञकर्माणि । 'अण् संज्ञायाम्' ( वा ३०७० ) । चतुर्षु मासेषु भवति चातुर्मासी आषाढी पौर्णमासी । अण्णन्तत्वान्ङीप् । ( १७५९ ) **तस्य च दक्षिणा यज्ञाख्येभ्यः ५ । १ । ९५ ॥** द्वादशाहस्य दक्षिणा द्वादशाहिकी । आख्याग्रहणादकालादपि । आग्निष्टोमिकी । वाजपेयिकी । ( १७६० ) **तत्र च दीयते कार्यं भववत् ५ । १ । ९६ ॥** प्रावृषि दीयते कार्यं वा प्रावृषेण्यम् । शारदम् ।

इति तद्धिते प्राग्वतीये ठञधिकारे कालात् इत्यधिकारः सम्पूर्णः ।

---

मिदम् । तत्र भवो यज्ञः इत्यर्थे चतुर्मासशब्दातसप्तम्यन्ताण्ण्यो वाच्य इत्यर्थः । **चतुर्ष्विति** । चतुर्षु मासेषु अतीतेष्वित्यर्थः । **अण् सञ्ज्ञायामिति** । वार्तिकमिदम् । चतुर्मासशब्दात् भवार्थे अण् वाच्यः सञ्ज्ञायामित्यर्थः । **चतुर्ष्विति** । फाल्गुनीं पौर्णमासीमारभ्य चतुर्षु मासेष्वतीतेष्वित्यर्थः । **आषाढीति** । आषाढ्याः पौर्णमास्याः चातुर्मासीति सञ्ज्ञेति भावः । न च 'तत्र भवः' इत्यणैव सिद्धमिति वाच्यम्, 'द्विगोर्लुगनपत्ये' इति लुङ्निवृत्त्यर्थत्वात् ।

( १७५९ ) **तस्य च दक्षिणा** । तस्य दक्षिणेत्यर्थे यज्ञकालवृत्तिभ्यः ठञ् स्यादित्यर्थः । **द्वादशाहस्येति** । द्वादशदिनसाध्यसुत्याकः क्रतुर्द्वादशाहः तस्येत्यर्थः । कालोपसर्जनक्रतुवाचित्वादयमपि कालवृत्तिरिति भावः । 'कालात्' इत्याधिकारसूत्रे हि यथाकथञ्चित्कालबोधकस्य ग्रहणमिति 'तदस्य परिमाणम्' इति सूत्रे भाष्ये स्पष्टम् । नन्वेवं सति अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकीत्यत्र ठञ् न स्यात् । अग्निष्टोमशब्दस्य कथञ्चिदपि कालवाचित्वाभावादित्यत आह—**आख्याग्रहणादकालादपीति** । अन्यथा यज्ञेभ्य इत्येव सिद्धे आख्याग्रहणवैयर्थ्यादिति भावः । वस्तुतस्तु यज्ञेभ्य इत्येवोक्तौ कालादित्यधिकारात् द्वादशाहादिशब्देभ्य एव स्यात्, न तु अग्निष्टोमादिशब्देभ्यः । आख्याग्रहणे तु अग्निष्टोमादिभ्यो द्वादशाहादिशब्देभ्यश्च सर्वेभ्यो यज्ञवाचिभ्य इति भाष्ये स्पष्टम् ।

( १७६० ) **तत्र च दीयते** । तत्र दीयते तत्र कार्यमित्यर्थयोः सप्तम्यन्तात्कालवाचिनो भववत्प्रत्ययाः स्युरित्यर्थः[1] । **प्रावृषेण्यमिति** । 'प्रावृष एण्यः' इति भवार्थे विहितः इहापि भवति । **शारदमिति** । शरदि दीयते कार्यं वेत्यर्थः । सन्धिवेलाद्यण् भवे विहितः,

---

१. कार्यग्रहणमनर्थकं, तत्रभवेन कृतत्वात् । किं पुनर्भवान् कार्यग्रहणमेव प्रत्याचष्टे न पुनर्दीयते ग्रहणमपि । यथैव हि यन्मासे कार्यं तन्मासे भवं भवति । यदपि मासे दीयते तदपि मासे भवं भवति । न सिध्यति—न तन्मासे दीयते । किं तर्हि ? मासे गते । एवं तर्हि औपश्लेषिकमधिकरणं विज्ञास्यते । एवं तर्हि योगविभागोत्तरकालमिदं पठितव्यम् । तस्य दक्षिणा यज्ञाख्येभ्यः, तत्र च दीयते, ततः कार्यं भववत्" इति । —महाभाष्यम् ।

## अथ ठञ्विधिप्रकरणम्

( १७६१ ) **व्युष्टादिभ्योऽण् ५ । १ । ९७ ॥** व्युष्टे दीयते कार्यं वा वैयुष्टम् । व्युष्ट, तीर्थ, संग्राम, प्रवास इत्यादि । 'अग्निपदादिभ्य उपसंख्यानम्' ( वा ३०७२ ) । अग्निपदे दीयते कार्यं वा आग्निपदम् । पैलुमूलम् । (१७६२) **तेन यथाकथा च हस्ताभ्यां णयतौ ५ । १ । ९८ ॥** यथाकथाचेत्यव्ययसङ्घातात्तृतीयान्ताद्धस्तशब्दाच्च यथासङ्ख्यं णयतौ स्तः । 'अर्थाभ्यां तु यथासङ्ख्यं नेष्यते' । यथाकथाच दीयते कार्यं वा याथाकथाचम् । अनादरेण देयं कार्यं वेत्यर्थः । हस्तेन दीयते कार्यं वा हस्त्यम् । ( १७६३ ) **सम्पादिनि ५ । १ । ९९ ॥** तेन इत्येव । कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकं मुखम् । कर्णालङ्काराभ्यामवश्यं शोभत इत्यर्थः । ( १७६४ ) **कर्मवेषाद्यत् ५ । १ । १०० ॥** कर्मणा सम्पादि कर्मण्यं शौर्यम् । वेषेण सम्पादी वेष्यो नटः । वेषः कृत्रिम आकारः । ( १७६५ ) **तस्मै प्रभवति सन्तापादिभ्यः ५ । १ । १०१ ॥** सन्तापाय प्रभवति सान्तापिकः । साङ्ग्रामिकः । ( १७६६ ) **योगाद्यच्च ५ । १ । १०२ ॥** चाट्ठञ् । योगाय प्रभवति योग्यः—यौगिकः ।

---

इहापि भवति । इदं वृत्त्यनुरोधेन । वस्तुतस्तु तत्र कार्यं दीयत इत्यर्थे यज्ञाख्येभ्यः भवव-त्प्रत्ययाः स्युरित्यर्थः । अग्निष्टोमे दीयते भक्तम् आग्निष्टोमिकम् । कार्यग्रहणादग्निष्टोमे दीयते हिरण्यमित्यत्र न भवति । न ह्यग्निष्टोमे हिरण्यं क्रियत इति भाष्ये स्पष्टम् ।

इति तद्धिते प्राग्वतीये ठञधिकारे कालात् इत्यधिकारः सम्पूर्णः ।

( १७६१ ) अथ ठञ्विधिर्निरूप्यते—**व्युष्टादिभ्योऽण्** । तत्र च दीयते कार्यमित्यनु-वर्तते । दीयते कार्यं वेत्यर्थे सप्तम्यन्तेभ्यो व्युष्टादिभ्योऽण् स्यात् । ठञोऽपवादः । व्युष्टं प्रभातम् । वैयुष्टमिति । अणि 'नय्वाभ्याम्' इत्यैच् ।

( १७६२ ) **तेन यथा** । अर्थाभ्यामिति । प्रकृत्योः प्रत्यययोश्च यथासङ्ख्यम्, न तु दीयते कार्यमित्यनयोरित्यर्थः, व्याख्यानादिति भावः ।

( १७६३ ) **सम्पादिनि** । तेनेत्येवेति । सम्पादः सम्पत्तिः शोभा अस्यास्तीति सम्पादी । तस्मिन्नर्थे तृतीयान्ताट्ठगित्यर्थः ।

( १७६४ ) **कर्मवेषाद्यत्** । तृतीयान्तात्कर्मन्शब्दात् वेषशब्दाच्च सम्पादिन्यर्थे यत्स्या-दित्यर्थः ।

( १७६५ ) **तस्मै प्रभवति** । चतुर्थ्यन्तेभ्यः सन्तापादिभ्यः प्रभवतीत्यर्थे ठञ् स्या-दित्यर्थः । सन्तापाय प्रभवतीति । शत्रूणां पीडायै शक्नोतीत्यर्थः ।

( १७६६ ) **योगाद्यच्च** । चतुर्थ्यन्तात्प्रभवतीत्यर्थं इति शेषः ।

( १७६७ ) कर्मण उकञ् ५ । १ । १०३ ॥ कर्मणे प्रभवति कार्मुकम् । ( १७६८ ) समयस्तदस्य प्राप्तम् ५ । १ । १०४ ॥ समयः प्राप्तोऽस्य सामयिकम् । ( १७६९ ) ऋतोरण् ५ । १ । १०५ ॥ ऋतुः प्राप्तोऽस्य आर्तवम् । 'उपवस्त्रादिभ्य उपसंख्यानम्' । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् । ( १७७० ) कालाद्यत् ५ । १ । १०७ ॥ कालः प्राप्तोऽस्य काल्यं शीतम् । ( १७७१ ) प्रकृष्टे ठञ् ५ । १ । १०८ ॥ कालात् इत्येव । तदस्येति च । प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम् । ( १७७२ ) प्रयोजनम् ५ । १ । १०९ ॥ तदस्य इत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणं च । ( १७७३ ) विशाखाषाढादण् मन्थ-दण्डयोः ५ । १ । ११० ॥ आभ्यामण् स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । 'चूडादिभ्य उपसंख्यानम्' । चूडा

---

( १७६७ ) कर्मण उकञ् । चतुर्थ्यन्तात्प्रभवतीत्यर्थे इति शेषः । कार्मुकमिति । उकञि टिलोपः ।

( १७६८ ) समयस्तदस्य । तदिति प्राप्तमिति च सामान्ये नपुंसकम् । समयः प्राप्तोऽस्येत्यर्थे प्रथमान्तात्समयशब्दात् ठञित्यर्थः । तदित्युत्तरार्थम् ।

( १७६९ ) ऋतोरण् । प्राप्तमित्येव । प्राप्तोऽस्येत्यर्थे प्रथमान्तात् ऋतोरणित्यर्थः । आर्तवमिति । अणि ओर्गुणः, आदिवृद्धिः, रपरत्वम् ।

( १७७० ) कालाद्यत् । तदस्य प्राप्तमित्येव । प्रथमान्तात्कालशब्दात् अस्य प्राप्त इत्यर्थे यदित्यर्थः । प्रातःकाले काल्यशब्दस्तु कल्यवदव्युत्पन्नं प्रातिपदिकम् । कल्यमेव काल्यं वा ।

( १७७१ ) प्रकृष्टे ठञ् । अस्य प्राप्त इत्यर्थे प्रकृष्टवृत्तेः कालशब्दात् ठञित्यर्थः । यतोऽपवादः । प्रकृष्टशब्दस्य विवरणं—दीर्घ इति ।

( १७७२ ) प्रयोजनम् । तदस्येत्येवेति । अस्य प्रयोजनमित्यर्थे प्रथमान्ताट्ठञित्यर्थः । इन्द्रमह इति । इन्द्रोत्सव इत्यर्थः । 'मह उद्धव उत्सवः' इत्यमरः । प्रयोजनं फलं कारणं चेति । प्रयुज्यते प्रवृत्त्या निष्पाद्यते इति कर्मणि ल्युटि प्रयोजनशब्दः फलवाची । प्रयुज्यते प्रवर्तते पुरुषोऽनेनेति करणे ल्युटि प्रयोजनशब्दः प्रवर्तकवाचीत्यर्थः ।

( १७७३ ) विशाखाषाढात् । विशाखाशब्दात् आषाढशब्दाच्च प्रथमान्तात् अस्य प्रयोजनमित्यर्थे अण् स्यात्, समुदायेन मन्थे दण्डे च क्रमात् गम्ये सतीत्यर्थः । तदाह—आभ्यामिति । स्थूणामेकां निखाय तस्यां रज्जुद्वयमधरोत्तरमासज्ज्य तयोः रज्ज्वोर्मन्थदण्डः ऊर्ध्वमासज्यते । येन रज्ज्वा भ्रामितेन दधि विलोड्यते इति स्थितिः । तत्र स्थूणा मन्थ इत्युच्यते । मन्थाख्यदण्डो दण्ड उच्यते । अनयोः वैशाखशब्दः आषाढशब्दश्च रूढौ ।

—चौडम् । श्रद्धा—श्राद्धम् । (१७७४) अनुप्रवचनादिभ्यश्छः ५ । १ । १११ ॥ अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् । (१७७५) समापनात्सपूर्वपदात् ५ । १ । ११२ ॥ व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमापनीयः । (१७७६) ऐकागारिकट् चौरे ५ । १ । ११३ ॥ एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चौरः । (१७७७) आकालिकडाद्यन्तवचने ५ । १ । ११४ ॥ समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याकाल आदेशः । आशु विनाशीत्यर्थः । पूर्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा । 'आकालाट्ठंश्च' (वा ३०७८) । आकालिका विद्युत् ।

इति तद्धिते प्राग्वतीयस्य ठञः पूर्णोऽवधिः ।

---

तत्रावयवार्थाभिनिवेशो न कर्तव्यः । चूडादिभ्य इति । चूडादिभ्यः प्रथमान्तेभ्यः अस्य प्रयोजनमित्यर्थे अणित्यर्थः । चौडमिति । चूडा प्रयोजनमस्येति विग्रहः । डलयोरभेदाच्चौलमित्यपि । श्रद्धा श्राद्धमिति । श्रद्धा प्रयोजनमस्येति विग्रहः । श्रद्धाशब्दादणि श्राद्धमित्यर्थः । अत्र प्रयोजनशब्दः कारणवाची । श्रद्धाहेतुकमिति यावत् ।

(१७७४) अनुप्रवचनादिभ्यश्छः । प्रथमान्तादनुप्रवचनादिशब्दादस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः । अनुप्रवचनं नाम उपनयनाङ्गं किञ्चित्कर्म आश्वलायनसूत्रे प्रसिद्धम् ।

(१७७५) समापनात्सपूर्वपदात् । सपूर्वपदात्समापनशब्दात् अस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः । व्याकरणसमापनीय इति । मङ्गलाचार इति शेषः ।

(१७७६) ऐकागारिकट् चौरे । एकमगारं प्रयोजनं प्रयोजकमस्य चौरस्येति विग्रहे एकागारशब्दादिकट्प्रत्यये ऐकागारिकट् इति निपात्यते । टित्त्वं ङीबर्थम् । प्रयोजनमित्येव सिद्धे चौर एवेति नियमार्थं सूत्रम् । एकमित्यस्य विवरणम्—असहायमिति । 'एके मुख्यान्यकेवलाः' इत्यमरः । मुमुषिषोरिति । चौर्यं कर्तुमिच्छोरित्यर्थः । चौरस्य हि असहायमगारमिष्टं गेहान्तरसत्त्वे चौर्यप्रकटनप्रसङ्गादिति भावः । चौरे किम् ? एकागार प्रयोजनमस्य भिक्षोरिति वाक्यमेव । भाष्ये तु 'एकागाराच्चौरे' इत्येव सुवचम् । प्रकृतत्वाट्ठञ् सिद्ध इत्युक्तम् ।

(१७७७) आकालिकट् । समानकालाविति बहुव्रीहिः । आद्यन्ताविति । उत्पत्तिविनाशावित्यर्थः । समानकालस्येति । समानकालशब्दस्य इकप्रत्यये परे आकालादेशो निपात्यत[1] इत्यर्थः । ननु उत्पत्तिविनाशयोरेककालिकत्वमसम्भवपराहतमित्यत आह—आशु

---

१. "धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥" —कैयटः ... १।१३४ ।

## अथ तद्धितेषु भावकर्मार्थाः

( १७७८ ) **तेन तुल्यं क्रिया चेद्वतिः** ५।१।११५॥ **ब्राह्मणेन तुल्यं ब्राह्मणवदधीते।** क्रिया चेत् इति किम्? गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः। ( १७७९ ) **तत्र तस्येव** ५।१।११६॥ **मथुरायामिव मथुरावत्स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवन्मै-**

---

**विनाशीति।** लक्षणां विनैवाह—पूर्वदिने इति। आकालाट्ठंश्चेति[1]। आकालशब्दादाद्यन्तवचनाट्ठन्प्रत्ययश्च वक्तव्य इत्यर्थः। चात् ठञ्। आकालिका विद्युदिति। ठनि टाप्। ठञि तु ङीप्। आकालिकी। अर्थः प्राग्वत्।

**इति तद्धिते प्राग्वतीयस्य ठञः पूर्णोऽवधिः।**

**अथ भावकर्मार्था निरूप्यन्ते**—( १७७८ ) **तेन तुल्यं क्रिया चेद्वतिः।** तुल्यमिति क्रियेत्यस्य विशेषणम्। सामान्याभिप्रायं नपुंसकम्। तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययः स्यात्। यत्तुल्यं सा चेति क्रियेत्यर्थः। तुल्या क्रियेत्यर्थे वतिः स्यादिति यावत्। **ब्राह्मणेन तुल्यं ब्राह्मणवदधीते इति।** अत्र ब्राह्मणवदित्युदाहरणम्। ब्राह्मणेन तुल्यमधीते इति विग्रहवाक्यम्। अत्र ब्राह्मणशब्देन ब्राह्मणकर्तृकाध्ययनं लक्ष्यते। ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकाध्ययनमिति बोधः। **गुणतुल्ये इति।** द्रव्यतुल्येऽपीति बोध्यम्। तेन चैत्रेण तुल्यो धनी देवदत्तः इत्यादौ न भवति। 'अयमेवं न तद्वत्' इत्यादौ वतेः साधुत्वार्थम् आहेति क्रियापदं प्रयुञ्जते वृद्धाः।

( १७७९ ) **तत्र तस्येव।** तत्रेवेति तस्येवेति चार्थे सप्तम्यन्तात् षष्ठ्यन्ताच्च वतिः स्यादित्यर्थः। अतृतीयान्तार्थं आरम्भः। अस्मादेव निर्देशादिवशब्दयोगे षष्ठ्यर्थे सप्तम्यपीति भाष्यम्। अत्र 'क्रिया चेद्' इति नानुवर्तते इत्यभिप्रेत्योदाहरति—**मथुरायामिव मथुरावत्स्रुघ्ने प्राकार इति।** अत्र मथुरायामिवेति नाधिकरणसप्तमी। तथा सति विद्यमानेति क्रियापदसापेक्षतया असामर्थ्यात्। अत एव अस्मादेव सूत्रनिर्देशादिवशब्दयोगे षष्ठ्यर्थे सप्तमीति भाष्यं सङ्गच्छते। मथुरासम्बन्धिप्राकारसदृशः स्रुघ्नस्य प्राकार इति बोधः। **मैत्रस्य भाव[2] इति।** वृत्तमित्यर्थः।

---

१. "एकागारान्निपातनाऽनर्थक्यं ठञ्प्रकरणात्। इदं तर्हि प्रयोजनं—चोर इति वक्ष्यामीति। इह मा भूत—'एकागारं प्रयोजनमस्य भिक्षोः इति'। यद्येतावत्प्रयोजनं स्यात् 'एकागाराच्चोरे' इत्येव ब्रूयात्"। —महाभाष्यम्।



२. सर्वत्र 'गावः' इत्येव पाठः वर्तते। बालमनोरमायां 'भावः' इति वर्तते।

त्रस्य गावः । ( १७८० ) तदर्हम् ५ । १ । ११७ ॥ विधिमर्हति विधिवत्–पूज्यते । क्रियाग्रहणं मण्डूकप्लुत्या अनुवर्तते । तेनेह न—राजानमर्हति छत्रम् । ( १७८१ ) तस्य भावस्त्वतलौ ५ । १ । ११९ ॥ प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । 'त्वान्तं क्लीबम्' ( लि १२० ), 'तलन्तं स्त्रियाम्' ( लि १७ ) । ( १७८२ ) आ च त्वात् ५ । १ । १२० ॥ 'ब्रह्मणस्त्व' इत्यतः प्राक्त्वतलावधिक्रियेते । अपवादैः

( १७८० ) तदर्हम् । अर्हतीत्यर्हम् । पचाद्यच् । तदिति कर्मणि द्वितीयान्तम्, लब्धुं योग्यं भवतीत्यर्थात् । कृद्योगलक्षणषष्ठ्यभावस्तु आर्षः । वतिरित्यनुवर्तते । द्वितीयान्तादर्ह-तीत्यर्थे वतिः स्यादित्यर्थः । विधिमर्हतीति । विधिं लब्धुं योग्यं भवतीत्यर्थः । विधिव-त्पूज्यत इति । हरिरिति शेषः । विधिं लब्धुं योग्यं हरिपूजनमित्यर्थः । विहितं प्रकार-मनतिक्रान्तमिति यावत् । मण्डूकप्लुत्येति । पूर्वसूत्रे अननुवृत्तेरिति भावः[1] ।

( १७८१ ) तस्य भावः । षष्ठ्यन्ताद्भाव इत्यर्थे त्वतलौ स्त इत्यर्थः । भावशब्दस्य अभिप्रायादावपि वृत्तेराह—प्रकृतिजन्यबोधे प्रकारो भाव इति । त्वतल्प्रत्ययौ यत उत्पत्स्येते तस्मात्प्रकृतिभूतशब्दात् व्यक्तिबोधे जायमाने यत् जात्यादिकं विशेषणतया भासते तद्व्यक्ति-विशेषणं भावशब्देन विवक्षितमित्यर्थः । यथा—गोशब्दाद्धि व्यक्तिबोधे जायमाने गोत्वं विशेषणत्वेन भासते, गोशब्दस्य गोत्ववतीषु व्यक्तिषु गोत्वे च शक्तिग्रहणात् । न हि गोत्वं विहाय गोव्यक्तिषु गोशब्दस्य शक्तिग्रहः सम्भवति, अतीतानागतानां वर्तमानानां चानन्त्येन युगपदुपस्थित्यसम्भवात् गोशब्दात् प्राणित्वपशुत्वादिरूपेणापि गोव्यक्तिप्रतीत्यापत्तेश्च । ततश्च सर्वासु गोव्यक्तिष्वनुगतं तदितरव्यक्तिभ्यो व्यावृत्तं कश्चिद्धर्मविशेषं शक्यतावच्छेदकं पुरस्कृत्य गोशब्दः प्रवर्तत इति सिद्धान्तः । एवं घटादिशब्दा अपि घटत्वादितत्तद्धर्मं पुरस्कृत्य प्रवर्तन्ते । तदिदं शब्दप्रवृत्तिनिमित्तं भावशब्देन विवक्षितमिति भाष्यकैयटयोः स्थितम् । गोर्भाव इति । गोशब्दस्य प्रवृत्तिनिमित्तमिति बोधः । त्वान्तं क्लीबं तलन्तं स्त्रियाम् इति । लिङ्गानुशासनसूत्रसिद्धमिदम् ।

( १७८२ ) आ च त्वात् । त्वतलावित्यनुवर्तते । आङ्मर्यादायाम् । तदाह—ब्रह्मणस्त्व इत्यतः प्रागिति । ननु 'तस्य भावस्त्वतलौ' इत्यतः त्वतलोरुत्तरसूत्रेष्वनुवृत्त्यैव सिद्धेरधिकारोऽयं व्यर्थं इत्यत आह—अपवादैरिति । 'पृथ्वादिभ्य इमनिज्वा' इत्यादि-विहितैरिमनिजादिभिरपवादैः समुच्चयार्थमित्यर्थः । असति त्वेतस्मिन्नधिकारसूत्रे उत्तरत्र

१. पूर्वसूत्रेण अन्यथासिद्धिं परिहरता भाष्यकारेण उक्तम्—"किमर्थमिदमुच्यते इति" तत्र 'तेन तुल्यं क्रिया चेद्वतिः' इत्येव सिद्धम् ? न सिध्यति । तत्र तृतीयासमर्थात् यदा अन्येन कर्तव्यां क्रियाम् अन्यः करोति तदा प्रत्यय उत्पाद्यते । इह पुनर्द्वितीयासमर्थात् आत्माहार्यां क्रियायाम् अर्हति कर्तरि निश्चितबलाधाने प्रत्यय उत्पाद्यते"—इति स्पष्टीकृतम् ।

सह समावेशार्थं, गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रियः भावः-स्त्रैणम्-स्त्रीत्वम्-स्त्रीता। पौंस्नम्-पुंस्त्वम्-पुंस्ता। (१७८३) न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः ५। १। १२१॥ इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा। अपतित्वम्। अपटुत्वम्। नञ्पूर्वात् किम्? बार्हस्पत्यम्। तत्पुरुषात् किम्? नास्य पटवः सन्तीत्यपटुः, तस्य भावः-आपटवम्। अचतुर-इति किम्? आचतुर्यम्। आसङ्गत्यम्। आलवण्यम्। आवटयम्। आयुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्। (१७८४) पृथ्वादिभ्य इमनिज्वा ५।

---

इमनिजादिविधिषु त्वतलोरनुपस्थितिः स्यात्। प्रत्यक्षनिर्दिष्टैरिमनिजादिविशेषैः शान्ताकाङ्क्षत्वात्। अन्यथा 'प्राग्दीव्यतोऽण्' इत्यधिकृतस्य अणः 'अत इञ्' इत्यादावपि प्रवृत्तिः स्यादिति भावः। प्रयोजनान्तरमाह-गुणवचनादिभ्य इति। अन्यथा भावेऽर्थे सावकाशयोस्त्वतलोः कर्मण्यर्थे गुणवचनादिभ्यो विशेषविहितेन ष्यञा बाधप्रसङ्ग इति भावः। नन्वेवमपि आत्वादित्येवास्तु, स्वरितत्वादेव पूर्वसूत्रादिह त्वतलोरनुवृत्तिसिद्धेस्तदनुकर्षार्थश्चकारो व्यर्थं इत्यत आह-चकार इति। अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भावः। पौंस्नमिति। संयोगान्तलोपे 'पुमः खय्यम्परे' इति रुत्वम्। पाक्षिकावनुनासिकानुस्वारौ, विसर्गे कृते सत्वम्। एवं पुंस्त्वम्। तत्र 'ह्रस्वात्तादौ' इति षत्वं तु न भवति, सवनादिषु पाठात्।

(१७८३) न नञ्पूर्वात्। इतः परमिति। त्वतल्विधेरूर्ध्वमित्यर्थः, नञ्पूर्वात् इत्युत्तरस्य प्रतिषेध इति भाष्यादिति भावः। चतुरादीनिति। चतुर, सङ्गत, लवण, वट, युध, कत, रस, लस, एतान् वर्जयित्वेत्यर्थः। अपतित्वमिति। इह 'पत्यन्तपुरोहितादिभ्यः' इति यक् न भवति। अपटुत्वमिति। इह 'इगन्ताच्च लघुपूर्वात्' इत्यण् न भवति। बार्हस्पत्यमिति। 'पत्यन्तपुरोहितादिभ्यः' इति यक्। आपटवमिति। 'इगन्ताच्च लघुपूर्वात्' इत्यण्। अपटुशब्दस्य बहुव्रीहित्वात्तत्पुरुषत्वाभावान्नास्याणो निषेध इति भावः। आचतुर्यमिति। अचतुरस्य भावः। ब्राह्मणादित्वात्ष्यञ्। आसङ्गत्यमिति। असङ्गतशब्दात् ष्यञ्। आलवण्यमिति। अलवणशब्दात् ष्यञ्। आवटयमिति। न वटः अवटः तस्मात् ष्यञ्। आयुध्यमिति। अयुधशब्दात् ष्यञ्। आकत्यमिति। अकतशब्दात् ष्यञ्। आरस्यमिति। अरसशब्दात् ष्यञ्। आलस्यमिति। लसतीति लसः, न लसः अलसः, तस्मात् ष्यञ्।

(१७८४) पृथ्वादिभ्य इमनिज्वा। तस्य भावः इत्यनुवर्तते। पृथ्वादिभ्यः षष्ठ्यन्तेभ्य भावे इमनिज् वा स्यादित्यर्थः। ननु वाग्रहणं व्यर्थम्, 'समर्थानां प्रथमाद्वा' इति महाविभाषयैव वैकल्पस्य सिद्धत्वात्। न च इमनिजभावे त्वतल्प्रत्ययार्थं वाग्रहणमिति

१ । १२२ ॥ वा-वचनमणादिसमावेशार्थम् । ( १७८५ ) र ऋतो हलादेर्लघोः ६ । ४ । १६१ ॥ हलादेर्लघोर्ऋकारस्य रः स्यात् इष्ठेमेयस्सु । ( १७८६ ) टेः ६ । ४ । १५५ ॥ भस्य टेर्लोपः स्यादिष्ठेमेयस्सु । पृथोर्भावः प्रथिमा–पार्थवम् । म्रदिमा–मार्दवम् । ( १७८७ ) वर्णदृढादिभ्यः ष्यञ्च ५ । १ । १२३ ॥ चादिमनिच् । शौक्ल्यम्–शुक्लिमा । दार्ढ्यम् । 'पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्' (वा ४२११) । द्रढिमा । षो ङीषर्थः । औचिती ।

---

वाच्यम्, आ च त्वादित्येव तत्समावेशसिद्धेरित्यत आह—वावचनमणादिसमावेशार्थमिति । पृथुमृदुप्रभृतिषु 'इगन्ताच्च लघुपूर्वात्' इत्यणः, चण्डखण्डादिषु गुणवचनलक्षणष्यञः, बालवत्सादिषु वयोवचनलक्षणस्य अञश्च औत्सर्गिकस्य समावेशार्थमित्यर्थः । अन्यथा महाविभाषावशादपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते इति 'पारे मध्ये षष्ठ्या वा' इति सूत्रभाष्ये सिद्धान्तितत्वादिमनिच्त्वतलामभावे तेषां प्रवृत्तिर्न स्यादिति भावः ।

( १७८५ ) र ऋतो हलादेः । र इति प्रथमान्तम् । इष्ठेमेयस्स्विति शेषपूरणम् । 'तुरिष्ठेमेयस्सु' इत्यतः तदनुवृत्तेरिति भावः । अङ्गस्येत्यधिकृतं हलादेरङ्गस्य लघोः ऋकारस्य र इति रेफाकारसङ्घात आदेशः स्यात् इष्ठनि इमनि ईयसि च परे इत्यर्थः ।

( १७८६ ) टेः । इष्ठेमेयस्सु इत्यनुवर्तते । 'अल्लोपोऽनः' इत्यतः लोपः इति च । तदाह—टेर्लोपः स्यादिष्ठेमेयस्स्विति । प्रथिमेति । पृथुशब्दादिमनिच्, चकार इत्, नकारादिकार उच्चारणार्थः । ऋकारस्य रः, उकारस्य गुणं बाधित्वा टेर्लोपः । पार्थवमिति । इमनिजभावे 'इगन्ताच्च लघुपूर्वात्' इत्यण् । म्रदिमेति । मृदुशब्दादिमनिचि ऋकारस्य रः, 'टेः' टिलोपश्च । मार्दवमिति । 'इगन्ताच्च' इत्यण् ।

( १७८७ ) वर्णदृढादिभ्यः ष्यञ्च । षष्ठ्यन्तेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ् च स्यादित्यर्थः । गुणवचनत्वादेव ष्यञि सिद्धे इमनिच्समुच्चयार्थं वचनम् ।

'पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्' ॥

इति वार्तिकमर्थतः सङ्गृह्णाति–पृथुमृदुभृशेत्यादि । तेन कृतयतीत्यादाविष्ठवत्त्वेऽपि रभावो न । द्रढिमेति । दृढशब्दादिमनिचि ऋकारस्य रः । भ्रशिमा क्रशिमा द्रढिमा परिव्रढिमा । ननु वर्णदृढादीनां ष्यञन्तानां लोकतो नपुंसकत्वात् ष्यञः षित्त्वस्य किं प्रयोजनमित्यत आह—षो ङीषर्थं इति । औचितीति । उचितशब्दात् ब्राह्मणादित्वात् ष्यञि लोकात् स्त्रीत्वम् । षित्त्वात् ङीषि 'हलस्तद्धितस्य' इति यलोपः । उचितस्तु न दृढादिः, तद्गणे अदर्शनात् इमनिच्प्रसङ्गाच्च । अस्यैव ष्यञ् उत्तरसूत्रे अनुवृत्तेरिहैव तस्य षित्त्वप्रयोजनकथनमिति बोध्यम् । याथाकामीति । काममनतिक्रम्य यथाकामम् । ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञि लोकात् स्त्रीत्वे षित्त्वात् ङीष् ।

याथाकामी। (१७८८) **गुणवचनब्राह्मणादिभ्यः कर्मणि च ५। १। १२४॥** चाद्भावे। जडस्य कर्म भावो वा जाड्यम्। मूढस्य भावः कर्म वा मौढ्यम्। ब्राह्मण्यम्। 'अर्हतो नुम् च-' ( वा ३०९२ )। अर्हतो भावः कर्म वा-आर्हन्त्यम्। आर्हन्ती। ब्राह्मणादिराकृतिगणः। ( १७८९ ) **यथातथायथापुरयोः पर्यायेण ७। ३। ३१॥** नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्ञिदादौ। अयथातथाभावः आयथातथ्यम्-अयाथातथ्यम्। आयथापुर्यम्-अयाथापुर्यम्। आपादसमाप्तेर्भावकर्माधिकारः। 'चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्' ( वा ३०९१ )। चत्वारो वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। त्रैलोक्यम् इत्यादि। सर्वे वेदाः सर्ववेदास्तानधीते सर्ववेदः। 'सर्वादे-' ( वा २७४८ ) इति लुक्। स एव सार्ववेद्यः। 'चतुर्वेदस्योभयपदवृद्धिश्च' ( ग सू ९३ )। चतुरो वेदानधीते चतुर्वेदः। स एव चातुर्वैद्यः। चतुर्विद्यस्य इति पाठान्तरम्। चतुर्विद्य एव चातुर्वैद्यः। ( १७९० ) **स्तेनाद्यन्नलोपश्च**

---

( १७८८ ) गुणवचनेति। गुणोपसर्जनद्रव्यवाचिभ्यो ब्राह्मणादिभ्यश्च षष्ठ्यन्तेभ्यो भावे, कर्मणि च अर्थे ष्यञित्यर्थः। अर्हतो नुम् चेति। वार्तिकमिदम्। 'अर्हः प्रशंसायाम्' इति सूत्रेण शतरि अर्हच्छब्दः पूज्यवाचीति कैयटः। अर्हच्छब्दात् ष्यञ् स्यात्प्रकृतेर्नुम् चेत्यर्थः। मित्त्वादन्त्यादचः परः। अनुस्वारपरसवर्णौ। लोकात् नपुंसकत्वं स्त्रीत्वं च। तदाह—आर्हन्त्यमार्हन्तीति। आर्हन्त्यशब्दात् ङीषि 'हलस्तद्धितस्य' इति यलोपः।

( १७८९ ) यथातथेति निपातसमुदायः। यथापुरमिति। पुराशब्देन पदार्थानतिवृत्ताव्ययीभावः। इमौ शब्दौ नञ्पूर्वपदौ ब्राह्मणादी, तयोः ष्यञि आदिवृद्धौ विशेषमाह—**यथातथायथापुरयोः पर्यायेण**। आदिवृद्धिप्रकरणे उत्तरपदस्य पूर्वस्य चेत्यधिकारे इदं सूत्रम्। 'नञः शुचि' इत्यतो नञ इत्यनुवर्तते। तदाह—**नञः परयोरेतयोरिति**। **यथातथायथापुरः** इत्यनयोरित्यर्थः। **पर्यायेणेति**। कदाचित्पूर्वपदस्य कदाचिदुत्तरपदस्येत्यर्थः। **आयथातथ्यमिति**। यथातथेति निपातनात् ष्यञि पूर्वपदस्यादिवृद्धिः। **अयाथातथ्यमिति**। उत्तरपदस्यादिवृद्धिः। **आयथापुर्यमिति**। यथापुरशब्दात् ष्यञि पूर्वपदस्यादिवृद्धिः। **अयाथापुर्यमिति**। उत्तरपदस्यादिवृद्धिः। **आपादसमाप्तेरिति**। अत्र व्याख्यानमेव शरणम्। **चतुर्वर्णादीनामिति**। चतुर्वर्णादिभ्यः स्वार्थे ष्यञ उपसङ्ख्यानमित्यर्थः। **सर्ववेदा इति**। 'पूर्वकाल' इति समासः। लुगिति। अध्येतृप्रत्ययस्येति शेषः। **स एव सार्ववेद्य इति**। सर्ववेदशब्दात् स्वार्थे ष्यञिति भावः। **चतुर्वेदस्येति**। वार्तिकमिदम्। ष्यञिति शेषः। **चतुर्वेद इति**। 'तद्धितार्थ' इति द्विगुः। ततोऽध्येतृप्रत्ययस्याणो 'द्विगोर्लुगनपत्ये' इति लुक्। **चतुर्विद्यस्येतीति**। 'चतुर्वेदस्योभयपदवृद्धिश्च' इति वार्तिके चतुर्वेदस्येत्यस्य स्थाने चतुर्विद्यस्येति केचित्पठन्तीत्यर्थः। ... विद्याः अधीते इत्यर्थे तद्धितार्थ इति द्विगौ

५ । १ । १२५ ॥ न इति सङ्घातग्रहणम् । 'स्तेन चौर्ये' पचाद्यच् । स्तेनस्य भावः कर्म वा स्तेयम् । स्तेनात् इति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति । ( १७९१ ) सख्युर्यः ५।१।१२६ ॥ सख्युर्भावः कर्म वा सख्यम् । 'दूतवणिग्भ्यां च' । दूतस्य भावः कर्म वा दूत्यम् । 'वणिज्यम्–' इति काशिका । माधवस्तु 'वणिज्याशब्दः स्वभावात्स्त्रीलिङ्गः, भाव एव चात्र प्रत्ययो न तु कर्मणि' इत्याह । भाष्ये तु 'दूतवणिग्भ्यां च' इति नास्त्येव । ब्राह्मणादित्वाद् वाणिज्यमपि । ( १७९२ ) कपिज्ञात्योर्ढक् ५ । १ । १२७ ॥ कापेयम् ।

---

'विद्यालक्षणकल्पान्ताच्च' इति ठकि 'द्विगोर्लुगनपत्ये' इति तस्य लुकि चतुर्विद्यशब्दात् स्वार्थे ष्यञि उभयपदवृद्धौ चातुर्वैद्यः इति रूपमिति भावः ।

( १७९० ) स्तेनाद्यन्नलोपश्च । यदिति च्छेदः । स्तेनशब्दात् षष्ठ्यन्तात् भावे कर्मणि चार्थे यत्स्यादित्यर्थः । नेति सङ्घातग्रहणमिति । नलोपश्चेत्यत्र नेत्यकार उच्चारणार्थो न भवति । किन्तु नकाराकारसङ्घातग्रहणमित्यर्थः । स्तेयमिति । स्तेनशब्दात् यत्प्रत्यये सति नेति सङ्घातस्य लोप इति भावः । न च नकारमात्रलोपेऽपि 'यस्येति च' इत्यकारलोपात् स्तेयमिति सिध्यतीति वाच्यम्, 'अचः परस्मिन्' इत्यकारलोपस्य स्थानिवत्त्वेन तमाश्रित्य एकारस्य अयादेशप्रसङ्गात् । न च सङ्घातग्रहणेऽपि 'अलोऽन्त्यस्य' इत्यकारस्यैव लोपः स्यादिति शङ्क्यम्, 'यस्येति च' इत्येव अकारस्य लोपसिद्धाविह नलोपविधेर्वैयर्थ्यात्, 'नानर्थकेऽलोन्त्यविधिः' इति निषेधाच्च । योगं विभज्येति । स्तेनादिति पृथक् सूत्रम् । ष्यञित्यनुवर्तते । स्तेनशब्दाद्भावे कर्मणि च ष्यञित्यर्थः । समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसङ्ख्यासञ्ज्ञाशब्दभिन्नमर्थवच्छब्दरूपं गुणवचनसञ्ज्ञकं भवतीति आकडारसूत्रभाष्यरीत्या स्तेनशब्दस्य पचाद्यजन्तस्य कृदन्तस्य गुणवचनत्वाभावादप्राप्ताविदं वचनम् । अव्युत्पन्नप्रातिपदिकतया गुणवचनत्वेऽपि यत्प्रत्ययेनापवादेन पक्षे समावेशार्थं वचनम् । ततो 'यन्नलोपश्च' इति योगान्तरम् । स्तेनात् इत्यनुवृत्तावुक्तोऽर्थः । केचिदिति । भाष्यादृष्टत्वात् योगविभागोऽयमप्रामाणिक इति भावः ।

( १७९१ ) सख्युर्यः । सखिशब्दात् षष्ठ्यन्तात् भावकर्मणोः यः स्यादित्यर्थः । दूतवणिग्भ्यां चेति । वार्तिकमिदम् । आभ्यामपि षष्ठ्यन्ताभ्यां भावकर्मणोः यत्स्यादिति वक्तव्यमित्यर्थः । नास्त्येवेति । वार्तिकत्वे तस्य भाष्ये पाठावश्यकत्वात् पाठस्य चाभावादप्रामाणिकमेवेदं वृत्तिपठितं वार्तिकमिति भावः । तर्हि दूतवणिग्भ्यां भावकर्मणोः कथं यप्रत्यय इत्याशङ्क्य नास्त्येव यप्रत्ययः, किन्तु ष्यञेवेत्याह—ब्राह्मणादित्वाद् वाणिज्यमपीति । अपिना दौत्यसङ्ग्रहः ।

( १७९२ ) कपिज्ञात्योर्ढक् । पञ्चम्यर्थे षष्ठी । आभ्यामपि षष्ठ्यन्ताभ्यां भावकर्मणोः ढगित्यर्थः । अत्र कपिज्ञात्योः भावकर्मणोश्च न यथासङ्ख्यं व्याख्यानात् ।

ज्ञातेयम् । ( १७९३ ) पत्यन्तपुरोहितादिभ्यो यक् ५ । १ । १२८ ॥ सैनापत्यम् । पौरोहित्यम् । 'राजाऽसे' ( ग सू १०६ ) । राजन्शब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा राज्यम् । समासे तु ब्राह्मणादित्वात्ष्यञ्–आधिराज्यम् । ( १७९४ ) प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ५ । १ । १२९ ॥ प्राणभृज्जातिः→आश्वम्-औष्ट्रम् । वयोवचनम्–कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् । ( १७९५ ) हायनान्तयुवादिभ्योऽण् ५ । १ । १३० ॥ द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् । 'श्रोत्रियस्य यलोपश्च' (वा ३०९३) । श्रौत्रम् । कुशलचपलनिपुण-पिशुनकुतूहलक्षेत्रज्ञाः युवादिषु ब्राह्मणादिषु च पठ्यन्ते । कौशल्यम्–कौशलमित्यादि । ( १७९६ ) इगन्ताच्च लघुपूर्वात् ५ । १ । १३१ ॥ शुचेर्भावः कर्म वा शौचम् ।

---

( १७९३ ) पत्यन्त । पत्यन्तेभ्यः पुरोहितादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोर्यक् स्यादित्यर्थः । राजाऽसे इति । पुरोहितादिगणसूत्रमिदम् । राजा असे इति च्छेदः । 'स' इति समासस्य प्राचां संज्ञा । तदाह–राजन्शब्द इति । राज्यमिति । यकि टिलोपः । 'ये चाभाव-कर्मणोः' इति प्रकृतिभावस्तु न, अभावकर्मणोरिति पर्युदासात् । समासे त्विति । अधिको राजा अधिराजः प्रादिसमासः । असे इति पर्युदासाद्यभावे ब्राह्मणादित्वात् ष्यञि आधि-राज्यमिति रूपमित्यर्थः । यक्ष्यञोः स्वरे विशेषः ।

( १७९४ ) प्राणभृज्जाति । प्राणभृतः–प्राणिनः, तज्जातिवाचिभ्यो वयोविशेषवाचिभ्य उद्गात्रादिभ्यश्च षष्ठ्यन्तेभ्यः भावकर्मणोः अञित्यर्थः । प्राणभृज्जातीति । उदाहरण-सूचनम् । एवं वयोवचनेति ।

( १७९५ ) हायनान्त । हायनान्तेभ्यः युवादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोः अण् स्यादित्यर्थः । द्वैहायनमिति । द्विहायनस्य भावः कर्म वेति विग्रहः । वयोवचनलक्षणस्य अञोऽपवादः । एवं त्रैहायनमपि । यौवनमिति । अनिति प्रकृतिभावान्न टिलोपः । श्रोत्रियस्येति । वार्तिकमिदम् । श्रोत्रियशब्दात् षष्ठ्यन्तात् भावकर्मणोः अण्, प्रकृते-र्यलोपश्चेत्यर्थः । चेति सङ्घातग्रहणम् । श्रौत्रमिति । छन्दोऽधीते इत्यर्थे छन्दश्शब्दात् घप्रत्यये तस्य इयादेशे प्रकृतेः श्रोत्र इत्यादेशे 'यस्येति च' इत्यल्लोपे श्रोत्रियशब्दः । श्रोत्रियस्य भावः कर्म वेत्यर्थे श्रोत्रियशब्दादणि यकाराकारसङ्घातस्य लोपे रेफादिकारस्य 'यस्येति च' इति लोपे श्रौत्रमिति रूपम् । यकारादकारस्य 'यस्येति च' इति लोपे सति यकारमात्रस्यानेन लोपे तु रेफादिकारस्य यण् स्यात् । न च तस्य 'यस्येति च' इति लोपः शङ्क्यः, लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति न्यायात् । अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाभावाच्च । 'श्रोत्रियस्य घलोपश्च' इत्येके पठन्ति ।



( १७९६ ) इगन्ताच्च । लघुः पूर्वोऽवयवो यस्येति विग्रहः । पूर्वत्वं च इगवधिकमेव

(मौनम्)। कथं काव्यम्? कविशब्दस्य ब्राह्मणादित्वात्ष्यञ्। (१७९७) योपधाद् गुरूपोत्तमाद्वुञ् ५।१।१३२॥ रामणीयकम्। आभिधानीयकम्। 'सहायाद्वा' (वा ३०९४)। साहाय्यम्–साहायकम्। (१७९८) द्वन्द्वमनोज्ञादिभ्यश्च ५।१।१३३॥ शैष्योपाध्यायिका। मानोज्ञकम्। (१७९९) गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ५।१।१३४॥ अत्याकारोऽधिक्षेपः। तदवेतः–ते गोत्रचरणयोर्भावकर्मणी प्राप्तः अवगतवान्वा। गार्गिकया श्लाघते। गार्ग्यत्वेन विकत्थत इत्यर्थः। गार्गिकया अत्याकुरुते। गार्गिकामवेतः। (१८००) होत्राभ्यश्छः ५।१।१३५॥ होत्राशब्दो ऋत्विग्वाची स्त्रीलिङ्गः। बहुवचनाद् विशेषग्रहणम्। अच्छावाकस्य भावः कर्म वा अच्छावाकीयम्।

---

गृह्यते, व्याख्यानात्। तथा च लघुपूर्वो य इक् तदन्तात्प्रातिपदिकात् षष्ठ्यन्ताद्भावकर्मणोरण् स्यादित्यर्थः। गुणवचनेत्यादेरपवादः। कथं काव्यमिति। कविशब्दस्य लघुपूर्वेगन्तत्वात् 'गुणवचन' इति ष्यञं बाधित्वा अण्प्रसङ्गात् काव्यमिति कथमित्याक्षेपः। समाधत्ते—कविशब्दस्येति। ब्राह्मणादित्वादित्यनन्तरं ष्यञि उपपाद्यमिति शेषः।

(१७९७) योपधात्। योपधात् गुरूपोत्तमात् प्रातिपदिकात् षष्ठ्यन्ताद्भावकर्मणोर्वुञित्यर्थः। रामणीयकमिति। रमणीयशब्दात् वुञ्। आभिधानीयकमिति। अभिधानीयशब्दाद् वुञ्। सहायाद्वेति। वुञिति शेषः। पक्षे ब्राह्मणादित्वात् ष्यञ्। इदन्तु वार्तिकं भाष्ये क्वचिन्मृग्यम्।

(१७९८) द्वन्द्वमनोज्ञादिभ्यश्च। द्वन्द्वात् मनोज्ञादिभ्यश्च षष्ठ्यन्तेभ्यो वुञित्यर्थः। शैष्योपाध्यायिकेति। शिष्यश्च उपाध्यायश्चेति द्वन्द्वाद् वुञ्। स्त्रीत्वं लोकात्। यद्यपि 'योपधात्' इत्येव सिध्यति, तथापि गोपालपालिकेत्युदाहरणं बोध्यम्।

(१७९९) गोत्रचरणात्। गोत्रप्रत्ययान्तात् शाखाध्येतृवाचिनश्च षष्ठ्यन्ताद्भावकर्मणोर्वुञ् स्यात् श्लाघादिषु विषयेष्वित्यर्थः। अपत्याधिकारादन्यत्र प्रवराध्यायप्रसिद्धं गोत्रमित्युक्तम्। अत्याकार इत्यस्य विवरणम्—अधिक्षेप इति। तदवेत इत्येतद्विवृणोति—ते गोत्रेति। तच्छब्देन गोत्रचरणयोः भावकर्मणी विवक्षिते। अवपूर्वादिणः प्राप्त्यर्थात् ज्ञानार्थाद्वा कर्तरि क्त। ते अवेतस्तदवेत इति विग्रहः। 'द्वितीया' इति योगविभागात् समासः। अवगतवान्वेति। ज्ञातवानित्यर्थः। गार्गिकयेति। गार्ग्यशब्दाद् वुञि 'आपत्यस्य' इति यलोपे, 'यस्येति च' इत्यकारलोपे, लोकात् स्त्रीत्वे टापि 'प्रत्ययस्थात्' इति इत्वे गार्गिकाशब्दः। काठिकया श्लाघते इति चरणादुदाहार्यम्। अत्र श्लाघादयः पदान्तरोपात्ता एव प्रत्ययार्थान्वयिनः, न तु प्रत्ययवाच्या इति बोध्यम्।

(१८००) होत्राभ्यश्छः। ऋत्विग्वाचीति। याज्ञिकप्रसिद्धेरिति भावः। ऋत्विग्विशेषवाचिभ्यः षष्ठ्यन्तेभ्यः छः स्याद्भावकर्मणोरित्यर्थः। अच्छावाकीयमिति। 'आ च त्वात्' इति त्वतलोरपि सर्वत्र समावेशो बोध्यः।

मित्रावरुणीयम् । ( १८०१ ) ब्रह्मणस्त्वः ५ । १ । १३६ ॥ होत्रावाचिनो ब्रह्मन्शब्दात्त्वः स्यात् । छस्यापवादः । ब्रह्मत्वम् । नेति वाच्ये त्ववचनं तलो बाधनार्थम् । ब्राह्मण-पर्यायाद् ब्रह्मन्शब्दात्तु त्वतलौ । ब्रह्मत्वम्-ब्रह्मता ।

इति तद्धिते भावकर्माधिकारप्रकरणम् ।

---

## अथ तद्धिते पाञ्चमिकप्रकरणम्

( १८०२ ) धान्यानां भवने क्षेत्रे खञ् ५ । २ । १ ॥ भवन्त्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् । ( १८०३ ) व्रीहिशाल्योर्ढक् ५ । २ । २ ॥ व्रैहेयम् ।

---

(१८०१ ) ब्रह्मणस्त्वः । होत्राभ्यः इत्यनुवृत्तमेकवचनेन विपरिणम्यते । तदाह— होत्रावाचिन इति । ऋत्विग्वाचिन इत्यर्थः । ननु ब्रह्मणो नेत्येवास्तु । ब्रह्मणश्छो न इत्यर्थलाभे सति छे निषिद्धे आ च त्वादित्यधिकारात् 'होत्राभ्यश्छः' इत्येव भावकर्मणो-स्त्वप्रत्ययः सिध्यतीत्यत आह— नेति वाच्ये इति । तलो बाधनार्थमिति । अधिकारवशा-द्धोत्राभ्य इति भावकर्मणोः प्राप्तस्य तलो निवृत्त्यर्थमित्यर्थः । एतेन 'तस्य भावस्त्वतलौ' इत्यनेन ब्रह्मणः कर्मणि त्वस्याप्राप्तेस्तदर्थं त्वप्रत्ययविधानमिति न शङ्क्यम् । नापि ब्रह्मणो नेत्युक्ते पूर्वसूत्रविहितानां त्वतलछानां निषेधः स्यादित्यपि शङ्क्यम्, शब्दोपात्तस्य छस्यैव निषेधात् । अत्र होत्राग्रहणानुवृत्तेः प्रयोजनमाह— ब्राह्मणपर्यायादिति ।

इति तद्धिते भावकर्मार्थकाः; नञ्स्नञोरधिकारश्च ।

---

अथ पाञ्चमिका निरूप्यन्ते—( १८०२ ) धान्यानां भवने । धान्यवाचिभ्यः षष्ठ्य-न्तेभ्यः भवने क्षेत्रेऽर्थे खञित्यर्थः । भवनशब्दस्य भावल्युडन्तत्वे क्षेत्रशब्दसामानाधिकरण्या-नुपपत्तेराह— भवन्त्यस्मिन्निति भवनमिति । भूधातुरुत्पत्तिवाची । उत्पत्तिस्थानं भवनमिति लभ्यते । धान्योत्पत्तिस्थानं क्षेत्रम् । 'केदारः क्षेत्रम्' इत्यमरः । क्षेत्रशब्दाभावे भूधातोः सत्तावाचित्वमाश्रित्य यत्र विद्यते तद्भवनमिति व्युत्पत्त्या आधारसामान्ये गृहकुसूलादि लभ्यते । अतः क्षेत्रपदम् । भवनपदाभावे तु क्षेत्रशब्देन सेतुबन्धकाश्यादिपुण्यप्रदेशोऽपि लभ्येत । अतो भवनपदम् । उभयोपादाने तु धान्योत्पत्तिप्रदेश एव लभ्यत इति न पौनरुक्त्यम् ।

( १८०३ ) व्रीहिशाल्योर्ढक् । व्रीहिशब्दात् [1]शालिशब्दाच्च षष्ठ्यन्ताद्भवने क्षेत्रेऽर्थे ढगित्यर्थः । खञोऽपवादः ।

---

१. "खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः । शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ॥"
—वा० रा० अरण्यकाण्डम् १६।१

शालेयम् । ( १८०४ ) **यवयवकषष्टिकाद्यत् ५ । २ । ३ ॥** यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् । ( १८०५ ) **विभाषा तिलमाषोमाभङ्गाणुभ्यः ५ । २ । ४ ॥** यत् वा स्यात् । पक्षे खञ् । तिल्यम्—तैलीनम् । माष्यम्–माषीणम् । उम्यम्–औमीनम् । भङ्ग्यम्–भाङ्गीनम् । अणव्यम्–आणवीनम् । ( १८०६ ) **सर्वचर्मणः कृतः खखञौ ५।२।५ ॥** असामर्थ्येऽपि निपातनात्समासः । सर्वश्चर्मणा कृतः→सर्वचर्मीणः–सार्वचर्मीणः । ( १८०७ ) **यथामुखसम्मुखस्य दर्शनः खः ५ । २ । ६ ॥** मुखस्य सदृशं यथामुखं प्रतिबिम्बम् । निपातनात्सादृश्येऽव्ययीभावः । समं सर्वं मुखं सम्मुखम् । समशब्दस्यान्तलोपो निपात्यते । यथामुखं दर्शनो यथामुखीनः । सर्वस्य मुखस्य दर्शनः सम्मुखीनः । ( १८०८ )

---

( १८०४ ) यवयवक । यव, यवक, षष्टिक एभ्यः षष्ठ्यन्तेभ्यो भवने क्षेत्रे यत्स्यादित्यर्थः । खञोऽपवादः । धान्यानामित्यनुवृत्तेरिहापि षष्ठ्येव समर्थविभक्तिः ।

( १८०५ ) विभाषा तिल । तिल, माष, उमा, भङ्ग, अणु एभ्यो धान्यविशेषवाचिभ्यः षष्ठ्यन्तेभ्यो यद्वा स्यादित्यर्थः । 'उमाभङ्गौ धान्यविशेषौ' इति भाष्यम्[1] । 'उमा स्यादतसी क्षुमा' इत्यमरः । अणव्यमिति । अणुर्धान्यविशेषः । यति 'ओर्गुणः' 'वान्तो यि' इत्यवादेशः ।

( १८०६ ) सर्वचर्मणः । सर्वचर्मन्‌शब्दात्तृतीयान्तात् चर्मणा सर्वं कृतम् इत्यर्थे खखञौ स्त इत्यर्थः । औचित्यादिह तृतीया समर्थविभक्तिः । नन्विह सर्वशब्दस्य कृते अन्वयात् चर्मण्यन्वयाभावादसामर्थ्याच्चर्मणा समासासम्भवात् कथं सर्वचर्मन्-शब्दात्प्रत्यय इत्यत आह—असामर्थ्येऽपीति । सर्वश्चर्मणा कृत इति विग्रहवाक्यम् । चर्मणा कृत्स्नः कृत इत्यर्थः । सर्वचर्मीण इति । 'नस्तद्धिते' इति टिलोपः । सर्वेण चर्मणा कृत इत्यर्थे तु न खखञौ व्याख्यानात् ।

( १८०७ ) यथामुखं । यथामुख, सम्मुख आभ्यां षष्ठ्यन्ताभ्यां दर्शन इत्यर्थे खः स्यादित्यर्थः । दृश्यतेऽस्मिन्निति दर्शनः आदर्शादिः । ननु मुखस्य सदृशं यथामुखमिति कथमव्ययीभावः ? 'यथाऽसादृश्ये' इति सादृश्ये तन्निषेधादित्यत आह—**निपातनादिति**[2] । सम्मुखशब्दे आभिमुख्यार्थकस्य समित्युपसर्गस्य न प्रवेशः, किन्तु समशब्दस्य सर्वपर्यायस्येत्याह—**समं सर्वं मुखं सम्मुखमिति** । समित्यस्य विवरणं सर्वमिति । समं च तन्मुखं चेति कर्मधारये सम्मुखशब्द इत्यर्थः । निपात्यत इति । इदं च भाष्ये स्पष्टम् । एवञ्च समित्युपसर्गपूर्वादयं प्रत्ययो नेष्यत इति भावः ।

---

१. अत्र कैयटः—"योगरूढिरियम् । उमा-भङ्गयोरपीति भावः । चमकेषु तु अधान्यान्यपि कानिचित् पठ्यन्ते, धान्यान्यपि न कानिचित् पठ्यन्ते । न हि तद्धान्यपरिगणनार्थमिति तत्रापाठात् उमाभङ्गयोरधान्यत्वं न भवति । शणसप्तदशानीति धान्यपरिगणनार्था स्मृतिरियम्" ।

२. भट्टिकाव्ये पदार्थानतिवृत्त्यर्थे अव्ययीभावः प्रदर्शितः । तथा च मायामृगं प्रक्रम्य तत्रोक्तम्—"यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्" ।

तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ५।२।७॥ सर्वादेः पथ्याद्यन्ताद् द्वितीयान्तात्खः स्यात्। सर्वपथान्व्याप्नोति सर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्त्रीणः। सर्वपात्रीणः। (१८०९) आप्रपदं प्राप्नोति ५।२।८॥ पादस्याग्रं प्रपदं, तन्मर्यादीकृत्य आप्रपदम्। आप्रपदीनः पटः। (१८१०) अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ५।२।९॥ अनुरायामे सादृश्ये वा। अनुपदं बद्धा अनुपदीना उपानत्। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयानयः स्थलविशेषः। तं नेयः अयानयीनः शारः। (१८११) परोवरपरम्परपुत्रपौत्रमनुभवति ५।२।१०॥

---

(१८०८) तत्सर्वादेः। पथिन्, अङ्ग, कर्मन्, पत्र, पात्र एषां समाहारद्वन्द्वात् पञ्चम्यर्थे द्वितीया। प्रातिपदिकविशेषणत्वात्तदन्तविधिः। ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति निषेधस्तु न, केवलानामेषां सर्वादित्वस्यासम्भवात्। तदिति तु द्वितीयान्तं व्याप्नोतीत्यत्रान्वेति। ततश्च तद्व्याप्नोतीत्यर्थे सर्वशब्दपूर्वपदकेभ्यः पथ्यङ्गकर्मपत्रपात्रान्तेभ्यः प्रातिपदिकेभ्यो द्वितीयान्तेभ्यः खः स्यादित्यर्थः फलति। तदाह—सर्वादेरित्यादिना। सर्वपथानिति। 'ऋक्पूः' इति समासान्तः।

(१८०९) आप्रपदम्। आप्रपदमित्यव्ययीभावात् द्वितीयान्तात्प्राप्नोतीत्यर्थे खः स्यादित्यर्थः। पादस्याग्रं प्रपदमिति। 'पादाग्रं प्रपदम्' इत्यमरः। आप्रपदमिति। 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः।

(१८१०) अनुपद। अनुपद, सर्वान्न, अयानय एषां समाहारद्वन्द्वात् द्वितीया। बद्धा, भक्षयति, नेय–एषां द्वन्द्वात् सप्तमी। तिङन्तस्य द्वन्द्वानुप्रवेश आर्षः। अनुपदादिभ्यो द्वितीयान्तेभ्यः क्रमाद्बद्धादिष्वर्थेषु खः स्यादित्यर्थः। अनुरायामे सादृश्ये वेति। आद्ये 'यस्य चायामः' इत्यव्ययीभावः, द्वितीये सादृश्ये अव्ययीभावः। अनुपदं बद्धेति। क्रियाविशेषणत्वाद् द्वितीया। अनुपदीना उपानदिति। पदसम्बन्धिदैर्घ्योपलक्षितेत्यर्थः। पदेन सदृशीति वा। तत्तुल्यपरिमाणेति यावत्। अयानय इति। द्यूते शाराणां प्रदक्षिणपरिवर्तनम् अयः, प्रसव्यपरिवर्तनम् अनयः। अयसहितः अनयः अयानयः। प्रदक्षिणप्रसव्यगामिनां यस्मिन् युग्मादिपदे स्थितानां परकीयैः शारैरनाक्रमणं तत्स्थानमिह अयानयशब्देन लक्षणयोच्यत इत्यर्थः। एतत्सर्वं भाष्ये स्पष्टम्।

'ससहायस्य शारस्य परैर्नाक्रम्यते पदम्। असहायस्तु शारेण परकीयेण बाध्यते॥'

इति द्यूतशास्त्रमर्यादा। विस्तरस्तु कैयटमनोरमादावनुसन्धेयः। तं नेय इति। तं स्थानविशेषमयानयाख्यं प्रापणीय इत्यर्थः। णीञ् द्विकर्मकः, प्रधाने कर्मणि यत्, 'अप्रधाने द्वितीया' इति भावकर्मलकारप्रक्रियायां वक्ष्यते।



(१८११) परोवर, परम्पर, पुत्रपौत्र एभ्यो द्वितीयान्तेभ्यः अनुभवती-

परांश्चावरांश्चानुभवतीति परोवरीणः । अवरस्योत्वं निपात्यते । परांश्च परतरांश्चानुभवति परम्परीणः । प्रकृतेः परम्परभावो निपात्यते । पुत्रपौत्रान् अनुभवति पुत्रपौत्रीणः । परम्परा-शब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गम् । तस्मादेव स्वार्थे ष्यञि पारम्पर्यम् । कथं पारोवर्यवदिति । असाधुरेव । खप्रत्ययसन्नियोगेनैव परोवरेति निपातनात् । ( १८१२ ) **अवारपारात्यन्तानुकामं गामी ५ । २ । ११ ॥** अवारपारं गामी अवारपारीणः । अवारीणः । पारीणः । पारावारीणः । अत्यन्तं गामी अत्यन्तीनः । भृशं गन्तेत्यर्थः । अनुकामं गामी अनुकामीनः । यथेष्टं गन्ता । ( १८१३ ) **समां समां विजायते ५ । २ । १२ ॥** यलोपोऽवशिष्टविभक्तेरलुक्च पूर्वपदे निपात्यते । समांसमीना गौः । 'समांसमीना सा येव

---

त्यर्थे खः स्यादित्यर्थः । परोवरीण इति । परे च अवरे च परावरे ।ताननुभवतीत्यर्थः । अवरस्योत्वमिति । अवरशब्दस्य आदेरकारस्य खप्रत्ययसन्नियोगेन उत्त्वं निपात्यत इत्यर्थः । एवं च विग्रहवाक्ये इदमुत्वं न भवति । प्रकृतेरिति । परपरतरशब्दात् द्वन्द्वा-त्खे सति तत्सन्नियोगेन प्रकृतेः परम्परभावो निपात्यत इत्यर्थः । नन्वेवं सति कल्याणपर-म्परेत्यादौ कथं परम्पराशब्दः ? पराम्परभावस्य खप्रत्ययसन्नियोगशिष्टत्वादित्यत आह—परम्पराशब्दस्त्विति । तस्मादेवेति । परम्परेत्यव्युत्पन्नप्रातिपदिकादेवेत्यर्थः । कथमिति । परावरशब्दात् भावे वा स्वार्थे वा ष्यञि अवरस्यादेरुत्त्वे पारोवर्यशब्दात् मतुपि पारोवर्य-वदिति कथमित्याक्षेपः, उत्त्वस्य खप्रत्ययसन्नियोगशिष्टत्वादिति भावः । उत्त्वं दुरुपपादमेवे-त्याह—असाधुरेवेति । नन्वत्र परोवरेति निर्देशात् खादन्यत्राप्युत्त्वं किं न स्यादित्यत आह—खप्रत्ययसन्नियोगेनैवेति । अत एव भाष्ये 'परांश्चावरांश्चानुभवति' इत्येव विग्रहो दर्शित इति भावः ।

( १८१२ ) अवारपार । अवारपार, अत्यन्त, अनुकाम एभ्यः गामीत्यर्थे खः स्या-दित्यर्थः । गामीत्यस्य अवश्यं गमिष्यन्नित्यर्थः । 'आवश्यकाधमर्ण्ययोर्णिनिः' इति णिनिः । 'भविष्यति गम्यादयः' इति भविष्यत्कालता । 'बहुलमाभीक्ष्ण्ये' इति वा णिनिः । अवारपारीण इति । अवारपारं गामीति विग्रहः । अवारपारशब्दाद्विगृहीताद्वि-परीतादपि, व्याख्यानात् । तदाह—अवारीणः पारीण इति । अत्यन्तीन इति । अत्यन्त-शब्दोऽत्र भृशवाची । तदाह—भृशं गन्तेति । अनुकाममिति । कामः इच्छा । तामनति-क्रम्येत्यर्थः । पदार्थानतिवृत्तावव्ययीभावः ।

( १८१३ ) समां समाम् । विपूर्वो जनिर्गर्भविमोचने वर्तते । विजायते गर्भम् । विमुञ्चतीत्यर्थः । धात्वर्थेनोपसंग्रहादकर्मकः । अतो न कर्मणि द्वितीया । गर्भविमोचनेन कृत्स्नायाः समाया अव्यापनादत्यन्तसंयोगलक्षणा द्वितीयापि न भवति, किन्तु सप्तम्येव । तत्र सप्तम्यन्तस्य समायामित्यस्य 'नित्यवीप्सयोः' इति द्विर्वचने समायां समायामिति

